| अशुद्धम् | शुद्धम् | पुटे | पङ्क्तौ |
|---|---|---|---|
| यस्योति | यस्येति | ९८ | १८ |
| वह्निः | वह्निः | १०५ | १४ |
| साध्यभाव | साध्याभाव | १०६ | १८ |
| मात्नोक्तो | मात्नोक्तौ | १०९ | ६ |
| मात्नोक्तो | मात्नोक्तौ | १०९ | ७ |
| नोत्पत्त्यन्तरम् | नोत्पत्त्यनन्तरम् | १०९ | ८ |
| विनिष्टस्य | विशिष्टस्य | १०९ | ११ |
| कर्त्रोश्वरिते | कर्त्रीश्वरिते | १११ | १२ |
| अग्निना | अग्निना | ११२ | ३ |
| प्रत्यायानात् | प्रत्यायनात् | ११३ | १६ |
| शक्तता | शक्यता | ११५ | ११ |
| प्रकरता | प्रकारता | १२३ | १८ |
| सर्वपां | सर्वेषां | १२८ | ३ |
| समवायसम्बन्धाव | समवायसम्बन्धानव | १५४ | १६ |
| समवायसम्बन्धाव | समवायसम्बन्धानव | १५५ | १ |
| कप्तया | कल्प्यतया | १५५ | ५ |
| प्रमात्मकाद्भ्रमा | प्रमात्मकादिवभ्रमा | १६१ | ११ |
| शाब्द | शाब्द | १६१ | १७ |
| परामार्शात् | परामर्शात् | १६२ | ४ |
| स्वरूपसम्बन्धेनजायमान | विषयतासम्बन्धेन-जायमान | १६२ | १४ |
| अनात्तरि | अनात्ते | १६२ | १६ |
| भ्रमणव्या | भ्रमणंव्या | १६३ | ५ |
| स्वरूपसाम्ब | स्वरूपसम्ब | १६४ | ११ |
| सति वह्निधूमा | सति धूमा | १७० | ४ |
| महानसीयवृत्तिर्नास्ति | महानसीयवह्नि-र्नास्ति | १७० | ९ |
| सम्बन्धानव | सम्बन्धाव | १७१ | १७ |
| वच्छेदकत्वत्ताग्रह | वच्छेदकताग्रह | १७१ | १९ |

श्रीगणेशाय नमः

# तर्कसङ्ग्रहसर्वस्वे

## प्रत्यक्षपरिच्छेदप्रारम्भः

प्रारिप्सितग्रन्थस्य निरन्तराय परिसमाप्त्यर्थमाचरितं मङ्गळं शिष्य-शिक्षायै ग्रन्थतो निबध्नन् प्रेक्षावत्प्रवृत्तिप्रयोजकीभूतमनुबन्धचतुष्टयं दर्शयन् चिकीर्षितं प्रतिजानीते निधायेति । अनुबन्धचतुष्टयञ्च विषय-प्रयोजनसम्बन्धाधिकारिरूपम् भवति तत्र तर्कसङ्ग्रहपदेन द्रव्यादि-पदार्थरूपविषयः प्रतिपाद्यप्रतिपादकभावरूपसम्बन्धश्च निर्दिष्टौ, बाला-नामित्यनेनाधिकारी, सुखबोधायेत्यत्र पदार्थतत्वज्ञानरूपप्रयोजनञ्च निर्दिष्टम् ।

ननु शिष्टाचारात् ग्रन्थादौ मङ्गळस्य कर्तव्यत्वेपि केवलस्ये-श्वरध्यानस्य गुरुवन्दनस्य वा केवलस्य पर्याप्तत्वेन उभयादरे किं बीजमितिचेन्न, केवलविश्वेश्वरध्यानमात्रादरे ॥श्लो॥ यस्य देवे परा भक्तिः यथा देवे तथा गुरौ, इति स्मरणात् गुरुवन्दनस्यापि कर्तव्यताप्राप्त्या तदभावे गुरुतिरस्कारः प्रसज्येतेति तदादरणम् । गुरुवन्दनमात्रादरे प्रत्यक्षमेकं चार्वाका, इति चार्वाकादीनां प्रत्यक्षमात्राङ्गीकर्तृत्वेन तन्मतेऽनुमानादिप्रमाणसिद्धेश्वराद्यनङ्गीकरणात् तन्मते गुरुवन्दनादीनामेवेश्वर-

ध्यानादिस्थानीयतया अत्र गुरुवन्दनमात्रादरे एतन्मतेपीश्वराद्यनङ्गीकरणं केषांचित्प्रसज्येत तत्प्रसक्तौ च अत्र आस्तिका न प्रवर्तेरन् इति । विश्वेश्वरध्यानादरणम् ॥

निधायेति श्लोकस्य शाब्दबोधप्रकार इत्थम् । निधायहृदि- विश्वेशमित्यत्र ॥ निपूर्वकधाधातोः ध्यानमर्थः, तदुत्तरवर्तिल्यपः उत्तर- कालिकत्वम्, हृत्पदं मनःपरम्, सप्तम्यर्थः सप्तम्यधिकरण इति सूत्रा- दधिकरणत्वम्, विश्वस्येश इत्यत्र षष्ठ्याः निरूपितत्वम्, ईशशब्दस्य नियामकतावानर्थः, तादृशनिरूपितत्वस्यं नियामकतायां स्वरूपसम्बन्धे- नान्वयः, ईशमित्यत्र द्वितीयायाः कर्मत्वम्, तच्चात्र विषयतारूपम्, (सविषयार्थबोधकधातुसमभिव्याहृतद्वितीयार्थीभूतकर्मत्वं विषयतारूपम्, इति न्यायात्,) हृच्छब्दोत्तरवर्तिसप्तम्यर्थीभूताधिकरणत्वस्य धाधात्वर्थी- भूतध्याने निरूपकत्वसम्बन्धेनान्वयः, तथाच हृदधिकरणकविश्वनिरूपित- कारणतावद्विषयकध्यानोत्तरकालिकीति फलितम् । विधाय गुरुवन्दन- मित्यत्र ॥ विपूर्वकधाधातोः विधानमर्थः, तत्र ल्यपः उत्तरकालिकत्वम्, गुरूणां वन्दनमित्यत्र षष्ठ्याः कर्मत्वं, द्वितीयायाः विषयत्वम्, तस्य विपूर्वकधाधात्वर्थीभूतकृतौ निरूपकत्वसम्बन्धेनान्वयः, तथाच गुरूद्देश्यक- वन्दनविषयककृत्युत्तरकालिकीति फलितम् । बालानां सुखबोधायेत्यत्र ॥ बालानामित्यत्र षष्ठ्याः समवेतत्वम्, सुखबोधः अनायासपूर्वकपदार्थ- तत्वज्ञानम्, चतुर्थ्याः प्रयोजकत्वं, तथाच बालसमवेतानायासपूर्वक- बोधफलिकेति फलितम् । क्रियते तर्कसङ्ग्रह इत्यत्र ॥ मयेत्यध्याहार्यं, अस्मच्छब्दस्यान्नंभट्टः, तृतीयायाः समवेतत्वं, कृञ्धातोः कृतिरर्थः,



तदुत्तरवर्त्याख्यातस्य वर्तमानकालिकत्वं विषयत्वञ्चार्थः, तर्क्यन्ते प्रतिपाद्यन्त इति तर्काः पदार्थाः, तेषां सङ्ग्रहः संक्षेपेण स्वरूपकथनं, समवेतत्वस्य वर्तमानकालिकत्वस्य च कृतावन्वयः, कृतेः निरूपितत्व- सम्बन्धेन विषयतायां विषयतायाः तर्कसङ्ग्रहे स्वरूपसम्बन्धेन चान्वयः, अयं कैश्चित्खण्डशाब्दबोध इति व्यवह्रियते, वस्तुतस्तु, अस्य वृत्तिज्ञानत्वव्यवहारस्समुचितः । अखण्डशाब्दबोधप्रकारस्त्वित्थम्, हृदधिकरणकविश्वनिरूपितकारणतावद्विषयकध्यानोत्तरकालिकी, गुरूद्- देश्यकवन्दनविषयककृत्युत्तरकालिकी, बालसमवेतानायासपूर्वकपदार्थ- तत्वज्ञानफलिका, अन्नंभट्टसमवेता, वर्तमानकालिकी, या कृतिः तादृश- कृतिविषयः तर्कसङ्ग्रहः इति ॥

❀ अन्नम्भट्टकृततर्कसङ्ग्रहाख्यमूलग्रन्थप्रारम्भः ❀

मूलग्रन्थः ॥

निधाय हृदि विश्वेशं, विधाय गुरुवन्दनम्,
बालानां सुखबोधाय, क्रियते तर्कसङ्ग्रहः ॥
द्रव्यगुणकर्मसामान्यविशेषसमवायाभावाः सप्त पदार्थाः ।

पदार्थान्विभजते द्रव्येति ॥ ननु सामान्यलक्षणज्ञानाभावे विशेषजिज्ञासा नोदेति, विशेषजिज्ञासाऽभावे विशेषविभागोऽनुपपन्नः, यथा, अत्रैव गन्धवती पृथिवीत्यनेन पृथिव्याः गन्धवत्वरूपसामान्यल-

* विजातीयज्ञानानन्तरितसजातीयज्ञानपरम्परा ध्यानम् । ननु ध्यानस्य पर्यवसाने ज्ञानरूपतया एतन्मते आत्मन एव ज्ञानाधिकरण-

क्षणकथनानन्तरमेव सा कतिविधेति विशेषजिज्ञासाया उदयात् तन्निवृत्त्यर्थं नित्यानित्याचेति विशेषविभागः कृतः, तथाच पदार्थविभागात्मक् पदार्थसामान्यलक्षणस्यानिरूपणेन पदार्थविभागोऽनुपपन्न इति चेन्न, विभागवाक्यघटकपदार्थपदमेव पदस्यार्थः पदार्थ इति व्युत्पत्त्या अभिधेयत्वरूपसामान्यलक्षणं बोधयतीति नानुपपत्तिः। नच विभागवाक्यघटकपदार्थपदस्य विभागवाक्यान्तोच्चरितत्वेन सामान्यलक्षणस्य विभागवाक्यात्प्रागवश्यवक्तव्यत्वेन अनुपपत्तिः तदवस्थैवेति वाच्यम्, अग्निहोत्रं जुहोति, यवागूं पचतीत्यत्रेव पाठक्रमादर्थक्रमस्य प्राबल्यमङ्गीकृत्य विभागवाक्यानन्तरोच्चरितपदार्थपदस्य प्रथमं योजनयाऽनुपपत्तिर्वारणीया, योजनाप्रकारश्च पदार्थाः द्रव्यगुणकर्मसामान्यविशेषसमवायाभावास्सप्तेति, अथवा, पूर्वोक्ततर्कसङ्ग्रहपदेनैव पूर्वोक्तव्युत्पत्त्या प्रतिपाद्यत्वरूपसामान्यलक्षणं विभागवाक्यात् प्रागेव लभ्यत इति नानुपपत्तिः॥

पदार्थविभागवाक्यस्य शाब्दबोधप्रकार इत्थम्, अत्र द्रव्यादिपदं भावप्रधाननिर्देशेन द्रव्यत्वादिपरम्, सप्तपदस्य विभाजकधर्मसप्तकान्यतमवति लक्षणाङ्गीकार्या, द्रव्यत्वादीनां विभाजकधर्मसप्तकान्यतमत्वावच्छिन्नेऽभेदसम्बन्धेनान्वयः, तथाच द्रव्यत्वगुणत्वकर्मत्वसामान्यत्वविशेषत्वसमवायत्वाभावत्वरूपविभाजकधर्मसप्तकान्यतमवदभिन्नाः पदार्था इति शाब्दबोधः (विभागवाक्यघटकपदार्थतावच्छेदकधर्माः विभाजकधर्माः), सप्तपदन्तु अतिरिक्तपदार्थव्यवच्छेदे पर्यवसन्नम्। ननु द्रव्यादिपदानां द्रव्याद्यर्थकत्वस्वीकारेणैव सामंजस्ये द्रव्यत्वादिपरत्वमफलमिति चेन्न, कस्मिन्नपि पदार्थे द्रव्यादिसप्तकाभेदस्य असम्भवेन तत्परत्वमङ्गीकृत्य तादृशबोधस्यावश्यमङ्गीकर्तव्यत्वात्॥

---

त्वेन हृदधिकरणकत्वं ध्याने न सम्भवतीति चेन्न, समवायसम्बन्धेन हृदधिकरणकत्वं ज्ञाने न निवेश्यते, किन्तु हृदधिकरणकत्वस्य विश्वेश्वरेऽन्वये स्वविषयकज्ञानजनकत्वसम्बन्धेन तस्यान्वयः कर्तव्यः, स्वपदं विश्वेश्वरपरं, तस्य ध्यानेऽन्वये तु स्वाश्रयसंयुक्तत्वसम्बन्धेन तस्यान्वयो वक्तव्यः, स्वपदं ध्यानपरम्। यद्वा जनकत्वसम्बन्धेन हृदधिकरणकत्वस्य ध्यानेऽन्वयः कार्यः। अथवा हृत्पदेनात्मैव लक्ष्यते, हृत्पदशक्यमनस्सम्बन्धरूपलक्षणाया आत्मनि सत्वात्। यद्वा, हृदीत्यत्र सप्तम्याःजन्यत्वमेवार्थो वक्तव्यः, तस्य ध्यानेऽन्वयः कार्यः॥ नन्वेवं



मूलम्* तत्र द्रव्याणि, पृथिव्यप्तेजोवाय्वाकाशकालदिगात्ममनांसि नवैव॥ रूपरसगन्धस्पर्शसंख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वापरत्वगुरुत्वद्रवत्वस्नेहशब्दबुद्धिसुखदुःखेच्छाद्वेषप्रयत्नधर्माधर्मसंस्काराः चतुर्विंशतिः गुणाः॥ उत्क्षेपणापक्षेपणाकुञ्चनप्रसारणगमनानि पञ्च कर्माणि॥

द्रव्याणि विभजते तत्रेति, तच्छब्देन सप्तपदार्थाः प्रतिपाद्यन्ते. त्रल्प्रत्ययस्य घटकत्वमर्थः, अत्रापि पृथिव्यादिपदं पृथिवीत्वादिपरम्, नवपदस्य विभाजकधर्मनवकान्यतमवति लक्षणा, तथाच पृथिवीत्वाप्त्वतेजस्त्ववायुत्वाकाशत्वकालत्वदिक्त्वात्मत्वमनस्त्वरूपविभाजकधर्मनवकान्यतमवन्ति सप्तपदार्थघटकीभूतानि द्रव्याणि इति शाब्दबोधः।

नवपदं तमःप्रभृत्यधिकद्रव्यव्यवच्छेद एव पर्यवसन्नम् । नन्वत्रापि द्रव्यादीनां सामान्यलक्षणान्यनिरूप्य तेषां विभागकरणेन ग्रन्थकर्तुः न्यूनत्वमितिचेन्न, पदार्थविभागवाक्येनैव व्यावहारिकाणां द्रव्यत्वादि-सामान्यलक्षणानां लभ्यत्वेन न काचिदनुपपत्तिः ॥ गुणान् विभजते रूपेति, अन्वयक्रमः पूर्ववत्, अखण्डशाब्दबोधस्तु, रूपत्वरसत्वगन्धत्व-स्पर्शत्वसंख्यात्वपरिमाणत्वपृथक्त्वत्वसंयोगत्वविभागत्वपरत्वत्वापरत्वत्वगुरु-त्वत्वद्रवत्वत्वस्नेहत्वशब्दत्वबुद्धित्वसुखत्वदुःखत्वेच्छात्वद्वेषत्वप्रयत्नत्वधर्म-त्वाधर्मत्वसंस्कारत्वरूपविभाजकधर्मचतुर्विंशत्यन्यतमवन्तो गुणा इति । अत्रापि चतुर्विंशतिपदं लघुत्वमृदुत्वाद्यतिरिक्तगुणव्यवच्छेदार्थमेवेति ज्ञेयम् । कर्म विभजते उत्क्षेपणेति, उत्क्षेपणत्वापक्षेपणत्वाकुञ्चनत्वप्रसारणत्वगमनत्व-रूपविभाजकधर्मपञ्चकान्यतमवन्ति कर्माणीति शाब्दबोधः । पञ्चपदं उत्क्षेपणाद्यतिरिक्तकर्मव्यवच्छेदार्थमेव, अन्वयक्रमः पूर्ववदेव ॥

---

हृत्पदस्याव्यावर्तकतापत्तिः ज्ञानमात्रस्य मनोजन्यत्वेन तज्जन्यत्वकथनस्य निष्फलत्वादितिचेन्न, हृत्पदस्य हृदयरूपशरीरावयवार्थकत्वेन निपूर्वक-धाधातोः वृत्तित्वप्रकारकाहार्यज्ञानार्थकत्वेन सप्तम्या निरूपितत्वार्थ-कत्वेन च शरीरावयवरूपहृदयनिरूपितवृत्तित्वप्रकारकाहार्यज्ञानोत्तरकालि-कत्वस्य कृतौ लाभात् न कस्याप्यव्यावर्तकत्वशंकाप्रसक्तिः ॥ स्वोत्कृष्ट-त्वप्रकारकज्ञानानुकूलव्यापारो वन्दनम् ॥ ग्रहणधारणपटुः बालः ॥ सङ्ग्रहः संक्षेपेण स्वरूपकथनं, तच्च बहुतरार्थबोधकन्यूनसंख्याकशब्द-सन्दर्भः ॥



**मूलम्* सामान्यं द्विविधं परमपरञ्चेति । नित्य-द्रव्यवृत्तयो विशेषास्त्वनन्ता एव । सम-वायस्त्वेक एव । अभावश्चतुर्विधः, प्रागभावः प्रध्वंसाभावः अत्यन्ताभावः अन्योन्याभाव-श्चेति ॥**

सामान्यं विभजते सामान्यमिति, बिधापदस्यैव विभाजक-धर्मद्वयान्यतरवति लक्षणा स्वीकार्या, द्विपदं तात्पर्यग्राहकम्, अन्वय-क्रमः पूर्ववत्, तथाच परत्वापरत्वरूपविभाजकधर्मद्वयान्यतरवत्सामा-न्यमिति बोधः । घटत्वपटत्वादिजातीनामपरत्वमेव, सत्ताजातेः परत्वमेव, द्रव्यत्वपृथिवीत्वादिजातीनां परत्वापरत्वे उभेअपि सम्भवत इति ज्ञेयम् ॥ विशेषानाह नित्यद्रव्येति पृथिव्यादिचतुष्टयपरमाणवः आकाशादिपञ्चकञ्च नित्यद्रव्याणि, नित्यद्रव्येषु वृत्तय इत्यत्र सप्तम्याः निरूपितत्वमर्थः, वृत्तयः वृत्तिमन्तः, निरूपितत्वस्य वृत्तौ स्वरूपसम्बन्धेनान्वयः, तथाच नित्यद्रव्यनिरूपितवृत्तितावन्तः असंख्याकाः विशेषा इति बोधः । समवायमाह समवायेति, एकत्वविशिष्टाभिन्नस्समवाय इति बोधः । समवायगतैकत्वं न संख्यारूपम् द्रव्येतरवृत्तित्वात्, किन्तु यथाश्रुते स्वसजातीयधर्म्यन्तररहितत्वरूपं तत् ज्ञेयम्, समवायान्तरस्याभावेन

---

* गन्धवती पृथिवीत्यत्र शाब्दबोधप्रकारः ॥ गन्धोऽस्यामस्तीति गन्धवती, इदंशब्देन पृथिवी प्रतिपाद्यते, सप्तम्या अधिकरणत्वम्, अस्धातोराधेयत्वं, तदुत्तरवर्तितिप्प्रत्ययस्याश्रयत्वम्, पृथिव्याः अधिकरणत्वे आधेयत्वसम्बन्धेनान्वयः, पृथिवीनिष्ठाधिकरणतायाः आधेयत्वे

स्वसजातीयधर्म्यन्तररहितत्वं सम्भवत्येव । अभावं विभजते प्रागभाव इति, अन्वयक्रमः पूर्ववदेव, प्रागभावत्वप्रध्वंसाभावत्वात्यन्ताभावत्वा-न्योन्याभावत्वरूपविभाजकधर्मचतुष्टयान्यतमवान् अभाव इति शाब्द-बोधः ॥

**मूलम् * तत्र गन्धवती पृथिवी ॥**

पृथिवीं लक्षयति गन्धवतीति, तच्छब्देन नवद्रव्याणि प्रति-पाद्यन्ते, तल्प्रत्ययस्य घटकत्वम्, (निपातातिरिक्तनामार्थयोरभेदसम्बन्धे-नान्वयः इति न्यायेन नवद्रव्यघटकीभूता गन्धाधिकरणाभिन्ना पृथिवीति शाब्दबोधः ।) पृथिव्याः किंवा लक्षणमित्युक्तौ गन्धवत्वं लक्षणम्, गन्धवत्वञ्च गन्धनिष्ठाधेयतानिरूपिताधिकरणताश्रयत्वं, अत्र गन्धः आधेयः पृथिवी अधिकरणं, गन्धे आधेयता वर्तते पृथि-व्यामधिकरणता वर्तते, आधेयताया अधिकरणतायाश्च निरूप्य-

---

निरूपकत्वसम्बन्धेनान्वयः, तिबर्थाश्रयत्वस्य स्वरूपसम्बन्धेन गन्धेऽन्वयः, तथाच पृथिवीनिष्ठाधिकरणतानिरूपकाधेयताश्रयो गन्ध इति विग्रहवाक्य-जन्यो बोधः, (विग्रहवाक्याद्यादृशविशेषणविशेष्यभावापन्नपदार्थविषयक-बोधो जायते समासवाक्यात्तद्विपरीतबोधो जायते, इति नियमानुरोधेन गन्धवतीति समासवाक्यात् तद्विपरीतः गन्धनिष्ठाधेयतानिरूपिताधि-करणताश्रयाभिन्ना पृथिवीति शाब्दबोधो जायते ॥

* पृथिवीलक्षणे, आधेयतात्वेनाधेयतां अधिकरणतात्वेनाधि-करणतां च अप्रवेश्य गन्धनिष्ठा या तन्निरूपिता या तदाश्रयत्वमित्ये-



निरूपकभावः सम्बन्धः, सच कश्चन स्वरूपसम्बन्धविशेषः, तथाच गन्ध-निष्ठा या आधेयता पृथिव्यां गन्धोऽस्तीत्याकारकप्रतीतिसिद्धा गन्ध-निष्ठाऽऽधेयता, तन्निरूपिता या अधिकरणता पृथिवीनिष्ठाऽऽधिकरणता, तदाश्रया पृथिवी तदाश्रयत्वं पृथिव्यां वर्तते इति लक्ष्ये लक्षण-समन्वयः । नन्वेवंसति कालेऽतिव्याप्तिः, सर्वाधारः काल इत्याकारक-न्यायेन कालिकसम्बन्धेन कालस्य सर्वाधारत्वेन गन्धस्यापि सर्वा-न्तर्गतत्वेन गन्धनिष्ठा या आधेयता इत्युक्तौ कालिकसम्बन्धावच्छिन्ना गन्धनिष्ठाधेयता गृह्यते, तन्निरूपिता या अधिकरणता इत्युक्तौ काल-निष्ठाधिकरणता, तदाश्रयत्वस्य काले वर्तमानत्वादितिचेन्न, तद्वारणाय गन्धनिष्ठाधेयतायां समवायसम्बन्धावच्छिन्नत्वस्य निवेशनीयत्वात्. तन्निवेशे च काले कालिकसम्बन्धेन गन्धस्य विद्यमानत्वेन कालिक-

---

तावत एव लक्षणत्वस्वीकारे गन्धनिष्ठाधिकरणतानिरूपिताधेयतामादाय गन्धत्वेऽतिव्याप्तिप्रसङ्गः । समवायसम्बन्धावच्छिन्ना गन्धनिष्ठा या तन्निरूपिता या इति निवेशे तु समवायसम्बन्धावच्छिन्नगन्धनिष्ठप्रकार-तानिरूपितप्रकारितामादाय गन्धवती पृथिवीतिज्ञानेऽतिप्रसङ्गः, अतः आधेयतात्वादिना आधेयत्वादिनिवेशः कार्यः । गन्धनिष्ठा या तन्निरू-पिता या अधिकरणता तदाश्रयत्वमिति लक्षणाङ्गीकारे तु स्वनिष्ठाधेयता-निरूपितत्ववत् स्वनिरूपितत्वस्याप्यधिकरणतायामङ्गीकृतत्वेन गन्धनिष्ठ-लक्षणतानिष्ठाधेयतानिरूपिताधिकरणत्वस्यैव गन्धनिष्ठलक्षणतानिरूपिता-धिकरणत्वस्यापि गन्धे सत्वात्तत्रातिव्याप्तिप्रसङ्गः, समवायसम्बन्धावच्छिन्ना

सम्बन्धावाच्छिन्नगन्धनिष्ठाधेयतानिरूपिताधिकरणताश्रयत्वस्य विद्यमानत्वेपि काले समवायसम्बन्धेन गन्धाभावेन समवायसम्बन्धावच्छिन्नगन्धनिष्ठाधेयतानिरूपिताधिकरणताश्रयत्वाभावेन अतिव्याप्तेरभावात् । नचैव-मपि जलादावतिव्याप्तिः कथम्, गन्धे द्वे आधेयते वर्तेते एका गन्धत्वावच्छिन्ना अपरा गुणत्वावच्छिन्ना, तत्र गन्धनिष्ठा या आधेयता इत्युक्तौ गुणत्वावच्छिन्नाधेयता गृह्यते, एकधर्मावच्छिन्नाधेयता एकैवेति न्यायेन गन्धशीतस्पर्शादिनिष्ठाया गुणत्वावच्छिन्नाधेयताया एकत्वात्, तन्निरूपिता याऽधिकरणता जलादिनिष्ठाधिकरणता, तदाश्रयत्वस्य जलादौ विद्यमानत्वादिति वाच्यम्, तस्यामेवाधेयतायां गन्धत्वावच्छिन्नत्वस्यापि निवेशनीयत्वात्, तन्निवेशे तु जलादौ शीतस्पर्शादिगुणानां सत्वेन गुणत्वावच्छिन्नाधेयतानिरूपिताधिकरणताश्रयत्वस्य सत्वेपि गन्ध-

---

गन्धनिष्ठा या तन्निरूपिता या अधिकरणतेति लक्षणकरणेपि गन्धनिष्ठसमवायसम्बन्धावच्छिन्नलक्षणतानिरूपिताधिकरणतामादाय गन्ध एवातिप्रसङ्गः, अतः आधेयतात्वेनाधेयता प्रवेशनीया । गन्धनिष्ठाधेयतानिरूपिता या तदाश्रयत्वमिति लक्षणकरणे तु गन्धनिष्ठाधेयतानिरूपितावच्छेदकतामादाय गन्धत्वेतिप्रसङ्गः, आधेयतायां समवायसम्बन्धावच्छिन्नत्वनिवेशेपि एनामाधेयतावच्छेदकतामादायैव गन्धत्वेऽतिव्याप्तिर्वक्तव्या, अतः अधिकरणतात्वेनाधिकरणता प्रवेशनीया । ननु गन्धनिष्ठाधेयतानिरूपिताधिकरणताश्रयत्वमिति निष्कृष्टलक्षणेपि (स्वनिष्ठाधेयतानिरूपितत्ववत् स्वनिरूपितत्वमप्यधिकरणतायां सम्भवतीति, न्यायानु-



स्याभावेन गन्धत्वावच्छिन्नाधेयतानिरूपिताधिकरणताश्रयत्वस्याभावेन अतिव्याप्तेरभावात् । नच तथापि उत्पन्नविनष्टघटादावव्याप्तिः, (उत्पन्नं द्रव्यं क्षणमगुणं निष्क्रियञ्च तिष्ठतीति) न्यायेन उत्पत्तिक्षणे तत्र गुणस्यानुत्पन्नत्वेन द्वितीयक्षणे घटस्यैव नष्टत्वेन समवायसम्बन्धावच्छिन्नगन्धनिष्ठाधेयतानिरूपिताधिकरणताश्रयत्वस्याभावात्, नचैष नियमोनाङ्गीक्रियत इति वाच्यम्, उत्पत्तिक्षण एव द्रव्ये गुणादिस्वीकारे द्रव्यस्य स्वगतगुणादिकंप्रति कारणत्वाभावप्रसङ्गः द्रव्यस्य तथा गुणादिपूर्ववृत्तित्वाभावात् इति वाच्यम्, समवायसम्बन्धावाच्छिन्नगन्धत्वावच्छिन्नगन्धनिष्ठाधेयतानिरूपिताधिकरणतावद्वृत्तिजातिमत्वस्य लक्षणत्वेन विवक्षितत्वात्, उत्पन्नविनष्टघटे समवायसम्बन्धेन गन्धाश्रयत्वविरहेपि तादृशाधिकरणतावत्पुष्पादिवृत्तिपृथिवीत्वजातिमत्वस्य उत्पन्नविनष्टघटेपि विद्यमानत्वेनाव्याप्त्यभावात् । अतएव सुरभ्यसुरभ्यवयवारब्धद्रव्येपि नाव्याप्तिः ॥

---

सारेण) गन्धनिष्ठाधेयत्वनिष्ठाधेयतानिरूपिनाधिकरणत्वस्येव गन्धनिष्ठाधेयतानिरूपिताधिकरणत्वस्यापि गन्धे सत्वादतिव्याप्तिस्सम्भवतीतिचेन्न, गन्धनिष्ठाधेयत्वनिष्ठाधेयत्वानिरूपिता गन्धनिष्ठाधेयतानिरूपिता या अधिकरणता तदाश्रयत्वमिति वा गन्धनिरूपिताधिकरणत्वमिति वा लक्षणाङ्गीकरणे निरुक्तदोषाभावात् इति ॥

उत्पन्नविनष्टघटेऽव्याप्तिवारणाय समवायस्वसमवायिसमवेतत्वान्यतरसम्बन्धेन गन्धविशिष्टत्वमिति लघुलक्षणं वा परिष्करणीयम्, तथाच

नचैवमपि जलादावतिव्याप्तिः तदवस्थैव, तादृशाधिकरणतावत्पुष्पादिवृत्तिसत्तारूपजातिमत्वस्य जलादावपि सत्वादिति वाच्यम्, जातौ गन्धसामानाधिकरण्यस्येव द्रव्यत्वव्याप्यत्वस्यापि निवेशनीयत्वात्, तन्निवेशे तु सत्ताजातेः द्रव्यत्वाभाववद्गुणादिवृत्तित्वेन द्रव्यत्वाभाववदवृत्तित्वरूपव्याप्यत्वस्यासम्भवेन न तां जातिमादायातिप्रसक्तिः । नचैवमपि गन्धसमानाधिकरणद्रव्यत्वाभाववदवृत्तिद्रव्यत्वजातिमत्वस्य जलादौ सत्वात् पुनरप्यतिव्याप्तिः तत्र दुर्वारेति वाच्यम्, तत्र व्याप्यत्वं न तदभाववदवृत्तित्वरूपं निवेश्यते, किन्तु (न्यूनदेशवृत्तित्वरूपं) तद-

---

उत्पन्नविनष्टघटे समवायसम्बन्धेन गन्धाभावेपि स्वसमवायिसमवेतत्वसम्बन्धेन गन्धविशिष्टत्वं सम्भवतीति नाव्याप्तिः, स्वपदं अवयवगतगन्धपरं बोध्यम्, प्रथमसम्बन्धानुपादाने परमाणुषु । द्वितीयसम्बन्धानुपादाने उत्पन्नविनष्टघटेचाव्याप्तिरित्युभयोपादानम् । अस्मिन् लक्षणे जातिघटितलक्षणकरणावश्यकता नास्ति ।

सा द्विविधा नित्याऽनित्याचेत्यत्र, अत्रनित्यत्वानित्यत्वरूपविभाजकधर्मद्वयान्यतरवती पृथिवीति शाब्दबोधाङ्गीकारे घटः द्विविधः नित्योऽनित्यश्चेति वाक्यस्य प्रामाण्यापत्तिः, अत्रापि विषयस्याबाधितत्वात्, अतः तद्वारणाय उद्देश्यतावच्छेदकसामानाधिकरण्यस्य विधेयभूतविभाजकधर्मेषु सर्वेष्वप्यन्वयोङ्गीकार्यः, अत्र घटत्वसमामानाधिकरण्यस्य नित्यत्वेऽभावान्नापत्तिः । एवमपि घटो द्विविधः पृथिवी द्रव्यंचेति वाक्यस्य प्रामाण्यापत्तिर्दुर्वारा, तद्वारणाय उद्देश्यतावच्छेदकव्याप्यत्वस्य



धिकरणवृत्तिभेदप्रतियोगितावच्छेदकत्वरूपं तत् निवेश्यते, तथाच द्रव्यत्वाधिकरणं घटः तद्वृत्तिर्यो भेदः द्रव्यं नेत्याकारकप्रतीतिसिद्धो भेदः न सम्भवति, किन्तु पटो नेति भेदः तत्प्रतियोगितावच्छेदकीभूतजातिः पटत्वादिजातिरेव नतु द्रव्यत्वजातिः द्रव्यत्वाधिकरणे सत्तावन्नेतिभेदस्याप्यसम्भवेन सत्ताजातिरपि तद्वृत्तिभेदप्रतियोगितावच्छेदकीभूता न भवति, अतः सत्ताजातिं द्रव्यत्वजातिं वाऽऽदाय जलादौ नातिव्याप्तिः । नच तथापि जातित्वेन जातिमनिवेश्य गन्धसमानाधिकरणः द्रव्यत्वव्याप्यो यो धर्मः तादृशधर्मत्वम् इत्येतावदेव लक्षणं भवत्विति वाच्यम्, द्रव्यत्वाधिकरणाकाशादिनिष्ठभेदप्रतियोगितावच्छेदकीभूतपृथि

---

विधेयभूतविभाजकधर्मान्यतरत्वावच्छिन्ने (अन्यमतत्वावच्छिन्ने) अन्वयः- अङ्गीकार्यः । एवमपि द्रव्यं द्विविधं घटः पटश्चेति वाक्यस्य प्रामाण्यापत्तिः तद्वारणाय उद्देश्यतावच्छेदकव्यापकत्वस्यापि पूर्वोक्ते अन्यतरत्वावच्छिन्ने (अन्यतमत्वावच्छिन्ने) भानमङ्गीकार्यम् । एवमपि घटो द्विविधः कम्बुग्रीवादिमान्तद्धटश्चेति वाक्यस्य प्रमाण्यापत्तिः, तत्र निरुक्तव्याप्यत्वव्यापकत्वसामानाधिकरण्यानामबाधितत्वात्, अतस्तद्वारणाय विभाजकधर्मेषु परस्परविरुद्धत्वस्यापि भानमङ्गीकार्यम् । विधेयभूतयावद्विभाजकधर्मेषु उद्देश्यतावच्छेदकसामानाधिकरण्यभानाङ्गीकारेण घटो द्विविधः पृथिवी जलञ्चेत्याद्यापत्तेः दुरुपपादतया विभाजकधर्मेषु परस्परविरुद्धत्वभानाङ्गीकारेण घटो द्विविधः पृथिवी द्रव्यञ्चेत्याद्यापत्तेरपि दुरुपपादतया व्याप्यत्वभानाङ्गीकारावश्यकता नास्ति । अतएव नित्यत्वानित्यत्वयोः पृथिवी-

वीजलान्यतरत्वरूपधर्ममादाय जलादावतिप्रसङ्गात्। नच समवायेन तादृशधर्मवत्वं निवेश्यते, तादृशान्यतरत्वस्य भेदरूपतया स्वरूपसम्बन्धेनैव तस्य जलादौ विद्यमानतया समवायसम्बन्धेन तादृशधर्मवत्वस्य जलादावविद्यमानत्वेन अतिप्रसङ्गानापादकत्वेन च एतदेव लक्षणमुच्यत इति वाच्यम्, द्रव्यत्वाधिकरणं वाय्वादिः, तद्वृत्तिर्यो भेदः पृथिवीजलसंयोगवान्नेति भेदः, तत्प्रतियोगितावच्छेदकीभूतः गन्धसमानाधिकरणो यो धर्मः, पृथिवीजलसंयोगरूपो धर्मः, समवायसम्बन्धेन तादृशधर्मवत्वस्य जलादौ सत्वादतिव्याप्त्यापत्तेः, जातित्वेन जातिनिवेशे तु पृथिवीजलान्यतरत्वरूपस्य पृथिवीजलसंयोगरूपस्य वा धर्मस्य जातिरूपत्वाभावेन जलादावतिव्याप्त्यभावात्। पृथिव्यां लक्षणसमन्वयप्रकारस्त्वित्थम्, द्रव्यत्वादि-

---

त्वाभाववज्जलादिवृत्तित्वेन व्याप्यत्वासम्भवेन नित्यानित्यपदयोः नित्यानित्यपृथिवीत्वपरत्वमावश्यकमित्यपि प्रत्युक्तम्। तथाच प्रकृते पृथिवीत्वव्यापकं यत् अनित्यत्वविरुद्धपृथिवीत्वसमानाधिकरणनित्यत्वनित्यत्वविरुद्धपृथिवीत्वसमानाधिकरणानित्यत्वरूपविभाजकधर्मद्वयान्यतरत्वावच्छिन्नं तद्विशिष्टा पृथिवीति शाब्दबोधः, सामानाधिकरण्यस्य प्रत्येकं यावद्विभाजकधर्मेषु व्यापकत्वस्य अन्यतरत्वावच्छिन्नेचान्वयः। सामानाधिकरण्यस्य व्यापकत्वस्य च प्रकारविधया संसर्गविधया वा भानमङ्गीकार्यम्॥

* शरीरेन्द्रियविषयभेदादित्यत्र शाब्दबोधप्रकारः,। पुनश्शब्दः, पूर्वोक्तविभाजकधर्मभेदबोधकः, भेदः परस्परभिन्नार्थकशब्दसमुदायः, शरीरादिपदानां शरीरादिपदनिष्ठानुपूर्व्यवच्छिन्नार्थकत्वं, अस्यचाभेद-



जलादिकं, तद्वृत्तिर्यो भेदः पृथिवी नेति भेदः, तत्प्रतियोगितावच्छेदकीभूता गन्धाधिकरणवृत्तिर्या जातिः पृथिवीत्वरूपा जातिः तादृशजातिमत्वस्य पृथिव्यां सर्वत्रापि विद्यमानत्वाल्लक्षणसमन्वयः, नातिप्रसङ्गश्च। तथाच समवायसम्बन्धावच्छिन्नगन्धत्वावच्छिन्नाधेयतानिरूपिताधिकरणतावद्वृत्तिः द्रव्यत्वाधिकरणवृत्तिभेदप्रतियोगितावच्छेदकीभूता या जातिः तादृशजातिमत्वं पृथिव्याः लक्षणमिति पर्यवसन्नम्॥

**मूलम्* सा द्विविधा नित्याऽनित्याचेति, नित्या परमाणुरूपा, अनित्या कार्यरूपा, पुनस्त्रिविधा शरीरेन्द्रियविषयभेदात्, शरीरमस्मदादीनाम्, इन्द्रियं गन्धग्राहकं घ्राणं, तच्च नासाग्रवर्ति, विषयो मृत्पाषाणादिः॥**

पृथिवीं विभजते सा द्विविधेति, अत्र नित्यानित्यपदे नित्यत्वानित्यत्वपरे, इतिपदार्थश्चाभेदः, चकारः विरोधद्योतकः, विधापदस्य विभाजकधर्मद्वयान्यतरवति, लक्षणा, द्विपदं तत्तात्पर्यग्राहकं, तथाच

---

संबन्धेन भेदपदार्थेऽन्वयः, पञ्चम्याः ज्ञानज्ञाप्यत्वमर्थः, ज्ञानज्ञाप्यत्वञ्च ज्ञानजन्यशाब्दबोधविषयत्वं, अस्य च विधापदार्थभूत विभाजकधर्मेऽन्वयः, तथाच शरीरपदेन्द्रिय पदविषयपदाभिन्नपरस्परविरुद्धार्थकशब्दसमुदायजन्यशाब्दबोधविषयपूर्वोक्तविभाजकधर्मभिन्नविभाजकधर्मत्रयान्यतमवदभिन्ना पृथिवीति शाब्दबोधः। व्यापकत्वादिबोधः पूर्ववत् ग्राह्यः॥ एवं

नित्यत्वानित्यत्वरूपविभाजकधर्मद्वयान्यतरवदभिन्ना पृथिवीति शाब्दबोधः (उत्पत्तिशून्यत्वे सति नाशशून्यत्वं नित्यत्वं, उत्पत्तिमत्त्वे सति नाशवत्त्वमनित्यत्वम्) परमाणुरूपा पृथिवी नित्या, द्व्यणुकादिब्रह्माण्डान्तकार्यरूपा पृथिवी अनित्या। प्रकारान्तरेण विभजते पुनरिति, अत्रापि शरीरादिपदानां शरीरत्वादिपरत्वम्, भेदपदार्थो विशेषधर्मः, पञ्चम्याः अभेदोऽर्थः। तस्य च विधापदलक्ष्यतावच्छेदकविभाजकधर्मत्रयान्यतमवत्त्वेऽन्वयः, तथाच शरीरत्वेन्द्रियत्वविषयत्वरूपविशेषधर्माभिन्नविभाजकधर्मत्रयान्यतमवती पृथिवीति शब्दबोधः (धर्मे विभाजकत्वञ्च विभागवाक्यघटकपदजन्योपस्थितिनिरूपितविशेष्यतानिरूपितप्रकारताश्रयत्वम्) अत्रशरीरेन्द्रियविषयभेदेन विभागः पृथिवीसामान्यस्यैव, नानित्यपृथिव्याः, पुनः पदसारस्यात्। पार्थिवशरीरं दर्शयति शरीरमिति अस्मदादीनामित्यत्र षष्ठ्याः अवच्छेदकत्वमर्थः, तथाच अस्मदाद्यात्मावच्छेदकं शरीरं पार्थिवशरीरमित्यर्थः। पार्थिवेन्द्रियं दर्शयतीन्द्रियमिति, गन्धस्य ग्राहकं गन्धग्राहकं, षष्ठ्याः विषयतानिरूपकत्वं, ग्रहधातोः

---

उत्तरत्र आधेयत्वाधिकरणत्वघटितेषु जलादिलक्षणेषु आधेयतात्वेनाधेयतानिवेशस्य अधिकरणतात्वेनाधिकरणतानिवेशस्य च फलं पूर्वोक्तरीत्या बोध्यम्। कार्यत्वकारणत्वघटितेषु कालादिलक्षणेष्वपि कार्यतात्वेन कार्यतानिवेशस्य कारणतात्वेन कारणतानिवेशस्यापि फलं पूर्ववदेव ग्राह्यम्। विभागवाक्यस्थलेषु शाब्दबोधप्रकारः तत्र सामानाधिकरण्यव्यापकत्वपरस्परविरुद्धत्वादीनां प्रयोजनानि च पूर्ववदेव ग्राह्याणि ॥



प्रत्यक्षं, ण्वुल्प्रत्ययस्य जनकत्वञ्चार्थः, तथाच गन्धविषयकप्रत्यक्षजनकत्वेसतीन्द्रियत्वं घ्राणेन्द्रियस्य लक्षणमिति फलितम्, गन्धविषयकं यत्प्रत्यक्षं अयं सुरभिः अयमसुरभिरित्याकारकं प्रत्यक्षं, तज्जनकत्वेसतीन्द्रियत्वं घ्राणेन्द्रिये वर्तत इति लक्ष्ये लक्षणसमन्वयः। इन्द्रियत्वमात्रोपादाने चक्षुरादावपीन्द्रियत्वस्य सत्वाचत्रातिव्याप्तिः, तद्वारणाय गन्धविषयकप्रत्यक्षजनकत्वदळं, तन्निवेशे तु चक्षुरादाविन्द्रियत्वस्य सत्वेपि गन्धग्राहकत्वस्याभावान्नातिव्याप्तिः। तावन्मात्रोपादाने आत्मनो ज्ञानमात्रं प्रति समवायिकारणत्वेन गन्धविषयकप्रत्यक्षस्यापि ज्ञानान्तर्गतत्वेन तज्जनकत्वस्याप्यात्मनि सत्वेन आत्मन्यतिव्याप्तिः, अतः इन्द्रियत्वोपादानं, तन्निवेशे तु आत्मनि इन्द्रियत्वाभावान्नातिव्याप्तिः। नचैवमपि (आत्मा मनसा संयुज्यते, मन इन्द्रियेण, इन्द्रियमर्थेन, ततः प्रत्यक्षमुत्पद्यते, इति न्यायानुसारेण) मनसि गन्धग्राहकत्वस्य इन्द्रियत्वस्य च सत्वान्मनस्यतिव्याप्तिरिति वाच्यम्, इन्द्रियपदेन बहिरिन्द्रियस्य विवक्षणीयत्वात्, मनसि बहिरिन्द्रियत्वस्याभावान्नातिव्याप्तिः। बहिरिन्द्रियत्वञ्च मनोभिन्नेन्द्रियत्वम्। (यद्वा, शब्द रूपादिचतुष्टयान्यतमसाक्षात्कारजनकत्वे सतीन्द्रियत्वम्)। अथवा, सुखादिसाक्षात्काराजनकत्वे सतीन्द्रियत्वम् तत् ॥ गन्धग्राहकमिति प्रयोजनकथनं, घ्राणमिति संज्ञा, नासाग्रेत्याश्रयोक्तिः। विषयं दर्शयति विषय इति, शरीरेन्द्रियभिन्नत्वं विषयलक्षणम्, परमाणुरूपनित्यपृथिव्या अपि विषय एवान्तर्भावो ग्राह्यः। एवं पृथिवी निरूपिता ॥

मू* शीतस्पर्शवत्य आपः, ताः द्विविधाः, नित्या अनित्याश्चेति, नित्याः परमाणुरूपाः अनित्याः कार्यरूपाः, पुनस्त्रिविधाः शरीरेन्द्रियविषयभेदात्, शरीरं वरुणलोके, इन्द्रियं रसग्राहकं रसनं, तच्च जिह्वाग्रवर्ति, विषयस्सरित्समुद्रादिः ॥

अपां लक्षणमाह शीतस्पर्शेति । अन्वयबोधप्रकारः पूर्ववदेव । लक्षणन्तु शीतस्पर्शनिष्ठाधेयतानिरूपिताधिकरणताश्रयत्वम्, शीतस्पर्शनिष्ठा या आधेयता अप्सु शीतस्पर्शोऽस्तीत्याकारकप्रतीतिसिद्धा शीतस्पर्शनिष्ठाधेयता, तन्निरूपिता याऽधिकरणता अप्सु विद्यमानाऽधिकरणता, तदाश्रयत्वस्य अप्सु सत्वात्समन्वयः । अत्रापि काले पृथिव्यादौ च पूर्वोक्तविधयाऽतिव्याप्तिवारणाय उत्पन्नविनष्टजलेऽव्याप्तिवारणाय च शीतस्पर्शत्वावच्छिन्नसमवायसम्बन्धावच्छिन्नाधेयतानिरूपिताधिकरणतावद्वृत्तिद्रव्यत्वाधिकरणवृत्तिभेदप्रतियोगितावच्छेदकीभूतजातिमत्त्वमिति लक्षणं परिष्करणीयम् । अन्यत्सर्वं पूर्ववद्बोध्यम् । रसनेन्द्रियलक्षणन्तु रसविषयकप्रत्यक्षजनकत्वे सतीन्द्रियत्वम्, रसविषयकं यत्प्रत्यक्षं अयं मधुरः अयमाम्लः इत्याकारकं प्रत्यक्षं, तज्जनकत्वे सतीन्द्रियत्वस्य रसनेन्द्रिये सत्वात्समन्वयः । अत्र दळद्वयप्रयोजनन्तु पूर्ववद्बोध्यम् ॥

मू* उष्णस्पर्शवत्तेजः, तद्द्विविधं नित्यमनित्यञ्चेति, नित्यं परमाणुरूपं, अनित्यं कार्यरूपं, पुनस्त्रिविधं शरीरेन्द्रियविषयभेदात्, शरीर-



मादित्यलोके, इन्द्रियं रूपग्राहकं चक्षुः, तच्च कृष्णताराग्रवर्ति, विषयश्चतुर्विधः भौमदिव्यौदर्याकरजभेदात्, तत्र भौमं वह्न्यादि, दिव्यमबिन्धनं विद्युदादि, भुक्तस्य परिणामहेतुरौदर्यं; आकरजं सुवर्णादि ॥

तेजसो लक्षणमाह उष्णस्पर्शेति, अन्वयबोधप्रकारः पूर्ववत्, लक्षणन्तु उष्णस्पर्शनिष्ठाधेयतानिरूपिताधिकरणताश्रयत्वम्, उष्णस्पर्शनिष्ठा याऽऽधेयता तेजसि उष्णस्पर्शोऽस्तीत्याकारकप्रतीतिसिद्धा उष्णस्पर्शनिष्ठाऽऽधेयता, तन्निरूपिता याऽधिकरणता तेजोनिष्ठा अधिकरणता, तदाश्रयत्वं तेजसि वर्तत इति लक्ष्ये लक्षणसमन्वयः । अत्रापि काले जलादौ च पूर्वोक्तविधयाऽतिव्याप्तिवारणाय चन्द्रकिरणादावुत्पन्नविनष्टतेजसि चाव्याप्तिवारणाय च समवायसम्बन्धावच्छिन्नोष्णस्पर्शत्वावच्छिन्नाधेयतानिरूपिताधिकरणतावद्वृत्तिद्रव्यत्वाधिकरणवृत्तिभेदप्रतियोगितावच्छेदकीभूतजातिमत्त्वं तेजसो लक्षणमिति वक्तव्यम् । अन्यत्सर्वं पूर्ववद्बोध्यम् । चक्षुरिन्द्रियलक्षणन्तु रूपविषयकप्रत्यक्षजनकत्वे सतीन्द्रियत्वं, रूपविषयकं यत्प्रत्यक्षं अयं नीलः अयं पीत इत्याकारकं प्रत्यक्षं, तज्जनकत्वे सतीन्द्रियत्वस्य चक्षुरिन्द्रिये सत्वात्समन्वयः, विशेषणानुपादाने घ्राणादौ विशेष्यानुपादाने आत्मनि चातिव्याप्तिरित्युभयोपादानम् ॥

मू* रूपरहितस्पर्शवान्वायुः । स द्विविधः, नित्योऽनित्यश्चेति । नित्यः परमाणुरूपः, अनित्यः कार्यरूपः । पुनस्त्रिविधः, शरीरेन्द्रियविषयभेदात् । शरीरं वायुलोके । इन्द्रियं स्पर्शग्राहकं

त्वक्, सर्वशरीरवृत्तिः। विषयो वृक्षादिकंपनहेतुः वायुः, शरीरान्तस्संचारी वायुः प्राणश्च। सचैकोऽप्युपाधिभेदात् प्राणापानादिसंज्ञां लभते॥

वायुं निरूपयति रूपरहितेति, रूपेण राहितः रूपरहितः, तृतीयायाः प्रतियोगितानिरूपकत्वं, रहधातोः अत्यन्ताभावः, क्तप्रत्ययस्य आश्रयत्वञ्चार्थः, रूपस्य आधेयत्वसम्बन्धेन प्रतियोगितायामन्वयः, तथाच रूपनिष्ठप्रतियोगितानिरूपकाभावाश्रयत्वे सति स्पर्शवत्वं वायोर्लक्षणमिति फलितम्, (तदभावं प्रति तत्प्रतियोगीति, न्यायेन रूपाभावं प्रति रूपस्य प्रतियोगित्वेन रूपनिष्ठप्रतियोगितानिरूपको योऽभाव इत्युक्तौ वायौ रूपं नास्तीति प्रतीतिसिद्धो रूपाभावः, तदाश्रयत्वे सति स्पर्शवत्वस्य वायौ सत्वाल्लक्ष्ये लक्षणसमन्वयः। विशेषणमात्रोपादाने रूपाभाववत्वस्य गगनादौ सत्वादतिव्याप्तिः, विशेष्यनिवेशे तु स्पर्शवत्वस्य तत्राभावान्नातिव्याप्तिः। विशेष्यमात्रोपदाने पृथिव्यादित्रिके स्पर्शवत्वस्य सत्वादतिव्याप्तिः, अतः विशेषणोपादानम्, तन्निवेशे रूपरहितत्वस्य तत्राभावान्नातिव्याप्तिः। अत्रापि स्पर्शवत्वं समवायसम्बन्धावच्छिन्नस्पर्शत्वा-

---

वायुलक्षणे॥ प्रतियोगितात्वेन रूपनिष्ठप्रतियोगितां अभावत्वेनाभावञ्च अप्रवेश्य रूपनिष्ठा या तन्निरूपकोयः तदाश्रयत्वमितिलक्षणकरणे प्रथमयत्पदेन रूपवान्नेतिप्रतीतिसिद्धभेदप्रतियोगितावच्छेदकतां द्वितीययत्पदेन रूपवन्निष्ठप्रतियोगिताञ्च आदाय पृथिव्या-



वच्छिन्नाधेयतानिरूपिताधिकरणतावद्वृत्तिद्रव्यत्वाधिकरणवृत्तिभेदप्रतियोगितावच्छेदकजातिमत्वरूपमेव परिष्करणीयम्। अत्राधेयतायां समवायसम्बन्धावच्छिन्नत्वानिवेशे कालिकसम्बन्धावच्छिन्नाधेयतामादाय स्पर्शत्वावच्छिन्नत्वानिवेशे गुणत्वावच्छिन्नाधेयमादाय च काले रूपरहितत्वस्यापि सत्वात्तत्रातिव्याप्तिः, अतः तद्विशेषणद्वयोपादानम्। उत्पन्नविनष्टवायावव्याप्तिवारणायैव जातिघटितलक्षणपरिष्कारः कार्यः। सत्वादिजातिमादायाकाशादावतिव्याप्तिवारणाय जातौ द्रव्यत्वव्याप्यत्वं न्यूनदेशवृत्तित्वरूपं निवेशनीयम्। रूपरहितत्वदळस्याप्यत्र घटकत्वेन नीरूपपदार्थेषु दोषवारणेनैव स्पर्शवत्वदळघटकविशेषणानां सार्थक्यं बोध्यम्॥

अत्र रूपनिष्ठप्रतियोगितायां समवायसम्बन्धावच्छिन्नत्वं निवेशनीयं, अन्यथा रूपनिष्ठप्रतियोगितानिरूपको योऽभाव इत्युक्तौ संयोगसम्बन्धेन रूपं नास्तीत्याकारकप्रतीतिसिद्धः संयोगसम्बन्धावच्छिन्नरूपत्वावच्छिन्नप्रतियोगितानिरूपकाभावः, तदाश्रयत्वस्य पृथिव्यादौ सत्वात्

---

दित्रिके स्पर्शवत्वस्यापि सत्वात् अतिव्याप्तिर्वक्तव्या, तद्वारणाय प्रतियोगितात्वादिना तत्तन्निवेशः कर्तव्यः। रूपनिष्ठा या प्रतियोगिता तन्निरूपको यः तदाश्रयत्वमितिलक्षणकरणेतु रूपनिष्ठप्रतियोगिताकसमवायानुयोगित्वमादायपृथिव्यादित्रिके स्पर्शवत्वस्यापि सत्वात् अतिव्याप्तिः वक्तव्या, अतः अभावत्वेनाभावनिवेश आवश्यकः। रूपनिष्ठा या तन्निरूपको योऽभावः तदाश्रयत्वमितिलक्षणकरणेतु "रूपद्रव्यत्वप्रत्यक्ष-

तत्रातिव्याप्तिः भवति तन्निवेशे तु समवायसम्बन्धावच्छिन्नरूपनिष्ठप्रतियोगितानिरूपकाभावः समवायसम्बन्धेन रूपं नास्तीतिप्रतीतिसिद्धाभाव एव नतु संयोगसम्बन्धेन रूपाभावः, एतदीयप्रतियोगितायाः समवायसम्बन्धानवच्छिन्नत्वात्, अतः तादृशाभावाश्रयत्वस्य पृथिव्यादावभावेनातिव्याप्त्यभावात् । नचैवमपि पृथिव्यादावतिव्याप्तिः, समवायसम्बन्धावच्छिन्ना रूपनिष्ठा या प्रतियोगितेत्युक्तौ रूपघटत्वोभयं नास्तीत्याकारकप्रतीतिसिद्धाभावीया रूपघटत्वोभयत्वावच्छिन्ना प्रतियोगिता गृह्यते, तन्निरूपकाभावः रूपघटत्वोभयाभावः, एकसत्वे द्वयं नास्तीति प्रतीत्या पृथिव्यादौ रूपस्य सत्वेपि घटत्वादेः (उदासीनस्य) अभावेन तादृशोभयाभावाश्रयत्वस्य स्पर्शवत्वस्य च तत्र विद्यमानत्वात् इतिचेन्न रूपनिष्ठप्रतियोगितायां रूपत्वावच्छिन्नत्वस्य निवेशनीयत्वात्, तन्निवेशे तु रूपघटत्वोभयाभावीयप्रतियोगिताया, रूपघटत्वोभयत्वावच्छिन्नत्वेन रूपत्वावच्छिन्नप्रतियोगिताको योऽभाव इत्युक्तौ न तादृशोभयाभावः किन्तु रूपं नास्तीत्याकारकसामान्याभाव एव भवति, एतदाश्रयत्वस्य पृथिव्यादावभावान्नातिव्याप्तिः । नच तथापि रूपघटत्वोभयाभावीयप्रतियोगितायां रूपत्वमुभयत्वञ्चावच्छेदकमिति रूपत्वावच्छिन्नत्व-

---

योगिस्यात्प्रथमक्षिकं" इत्यनेन रूपस्यापि पृथिव्यादित्रिकलक्षणत्वाङ्गीकारेण रूपनिष्ठलक्षणतानिरूपकलक्ष्यतामादाय पृथिव्यादित्रिकेऽतिव्याप्तिः वक्तव्या, लक्ष्यताया अपि तदभावाभावरूपत्वेन अभावत्वस्यापि तत्राव्याहतत्वात्, अतः प्रतियोगितात्वेन प्रतियोगिता निवेशनीया । नचैवं



निवेशेपि निरुक्तोभयत्वावच्छिन्नप्रतियोगितामादाय तत्रातिव्याप्तिः तदवस्थैवेति वाच्यम्, रूपत्वातिरिक्तधर्मानवच्छिन्नत्वस्य तदर्थत्वात्, तादृशोभयाभावीयप्रतियोगितायाः रूपत्वातिरिक्तोभयत्वरूपधर्मावच्छिन्नत्वेन तदनवच्छिन्नप्रतियोगिताकाभावपदेन रूपसामान्याभावस्यैव ग्राह्यतया तदाश्रयत्वस्य पृथिव्यादावभावेनातिव्याप्त्यभावात् । नचैवमपि पृथिव्यादावतिव्याप्तिः, कथम्, समवायसम्बन्धावच्छिन्नरूपत्वावच्छिन्नप्रतियोगितकाभावनिष्ठा याऽधेयतेत्युक्तौ तादृशरूपाभावनिष्ठा कालिकसम्बन्धावच्छिन्नाधेयता गृह्यते, तन्निरूपिताधिकरणताश्रयत्वस्य (जन्यानां कालोपाधित्वम्, इति न्यायेन) पृथिव्यादौ सत्वात् तत्र स्पर्शवत्वस्य च सत्वात् अतिव्याप्तिरिति वाच्यम्, रूपाभावनिष्ठाधेयतायां स्वरूपसम्बन्धावच्छिन्नत्वस्य विशेषणीयत्वात्, तन्निवेशे पृथिव्यादौ कालिकसम्बन्धेन रूपाभावस्य सत्वेपि स्वरूपसम्बन्धेन तस्याभावान्नातिव्याप्तिः ॥

नन्वेवमपि घटादावतिव्याप्तिः, (उत्पन्नं द्रव्यं क्षणमगुणं निष्क्रियञ्च तिष्ठति, इति न्यायेन उत्पत्तिक्षणावच्छेदेन तत्र रूपा-

---

सतिप्रतियोगितात्वावच्छिन्नस्य अभावत्वावच्छिन्नस्य च निवेशेपि रूपनिष्ठप्रतियोगितानिरूपकसमवायरूपभावात्मकाभावमादाय पृथिव्यादित्रिकेऽतिव्याप्तिः दुर्वारेतिवाच्यम्, अभावत्वस्य भावभिन्नत्वरूपस्य निवेशनीयत्वात् । नचैवं रूपनिष्ठलक्षणतानिरूपकलक्ष्यतामादाय पूर्वोक्तातिव्याप्तिः नसंगच्छत इतिवाच्यम्, गुणत्वाभावे रूपस्य स्वाभाववत्व-

भावाश्रयत्वस्य द्वितीयादिक्षणावच्छेदेन स्पर्शवत्त्वस्य च सत्त्वात् इति वाच्यम्, रूपाभावनिष्ठाधेयतानिरूपिताधिकरणतायां निरवच्छिन्नत्वस्य विशेषणीयत्वात्, तथाच घटादिनिष्ठायाः रूपाभावाधिकरणताया उत्पत्तिकालावच्छिन्नतया निरवच्छिन्नतदधिकरणत्वस्य घटादावभावेनातिव्याप्त्यभावात् ।) (अथवा, रूपरहित इत्यनेन रूपानधिकरणत्वस्य विवक्षितत्वात्, भेदस्य व्याप्यवृत्तित्वात् व्याप्यवृत्तेरवच्छेदकसद्भावे प्रमाणाभावाच्च घटादौ निरुक्तरीत्याऽतिव्याप्तेरभावात्) स्वप्रतियोग्यनधिकरणं यद्रूपाभावाधिकरणं तत्त्वमिति विवक्षणात् घटादौ नातिव्याप्तिः, स्वपदं रूपाभावपरं, उत्पत्तिकालावच्छेदेन रूपाभावाधिकरणीभूतघटस्य स्वपदग्राह्यरूपाभावप्रतियोगिभूतरूपस्य द्वितीयादिक्षणावच्छेदेनाधिकरणतया तद्भिन्नत्वस्य घटादावभावात् ॥

---

सम्बन्धेन विद्यमानतया स्वनिष्ठाधिकरणतानिरूपितत्ववत् स्वनिरूपितत्वस्याप्याधेयतायामङ्गीकृतत्वेन स्वाभाववत्त्वसम्बन्धावच्छिन्नरूपनिष्ठाधेयतानिरूपकगुणत्वाभाववत्त्वमादाय पृथिव्यादित्रिके स्पर्शवत्त्वस्यापिसत्वात् तत्र दोषवारणायैव प्रतियोगितात्वेन प्रतियोगितानिवेशः कर्तव्यः । न च समवायसम्बन्धावच्छिन्ना रूपनिष्ठा या तन्निरूपकाभावाश्रयत्वमिति लक्षणकरणेतु ध्वंसप्रागभावनिरूपितप्रतियोगितायाः समवायसम्बन्धानवच्छिन्नतया रूपध्वंसादिकमादाय पृथिव्यादावतिव्याप्त्यभावेन अत्यन्ताभावत्वेनाभावनिवेशावश्यकत्वाभावेन प्रकृते समवायसम्बन्धावच्छिन्नरूपनिष्ठकार्यतानिरूपकरूपप्रागभावाश्रयत्वमादाय पृथिव्यादावतिव्याप्तेः,



नन्वेवमपि उत्पन्नविनष्टवाय्वाव्याप्तिवारणाय स्पर्शवत्त्वस्य स्पर्शाधिकरणवृत्तिद्रव्यत्वव्याप्यजातिमत्त्वरूपत्वेन परिष्करणीयतया उत्पन्नविनष्टघटे निरवच्छिन्नरूपाभावाधिकरणत्वस्य समवायेन स्पर्शाभावेऽपि स्पर्शसमानाधिकरणद्रव्यत्वव्याप्यपृथिवीत्वजातिमत्त्वस्य च सत्वाच्चन्नातिव्याप्तिरिति वाच्यम्, रूपासमानाधिकरणत्वस्य स्पर्शसमानाधिकरणद्रव्यत्वव्याप्यजातौ विशेषणीयत्वात्, तथाच स्पर्शसमानाधिकरणद्रव्यत्वव्याप्यपृथिवीत्वजातेः रूपाधिकरणघटादिवृत्तित्वेन रूपासामानाधिकरण्यस्य पृथिवीत्वादिजातावभावेन पूर्वोक्तरीत्या घटादौ नातिप्रसङ्गः । नचैवं सति गगनत्वस्य एकव्यक्तिवृत्तित्वेन जातित्वाभावेन द्रव्यत्वादेर्जातित्वेऽपि रूपासामानाधिकरण्याभावेन रूपासमानाधिकरणजातिमत्त्वस्य गगनादावभावात् स्पर्शवत्त्वदलमनर्थकमिति वाच्यम्, रूपासमानाधिकरणगुणत्वादिजातिमादाय रूपादावतिव्याप्तिवारणायैवस्पर्शवत्त्वदलसार्थक्यात्, तन्निवेशे तु गुणे गुणानङ्गीकारेण रूपादौ स्पर्शाभावान्नातिव्याप्तिः । नचैवमपि रूपासमानाधिकरणजातौ द्रव्यत्वव्याप्यत्वविशेषणेनैव गुणत्वादिजातिमादाय रूपादावतिव्याप्तिवारणसम्भवात्

---

समवायसम्बन्धेन जायमानरूपं प्रति रूपप्रागभावस्य कारणत्वात् स्वनिष्ठकारणतानिरूपितत्वस्येव स्वनिरूपितत्वस्यापिकार्यतायां अङ्गीकृतत्वाच्च ॥ अथवा, समवायसम्बन्धावच्छिन्नत्वघटितपूर्वोक्तलक्षणे अभावत्वेनाभावघटिते प्रतियोगितात्वावच्छिन्ननिवेशे प्रयोजनाभावेपि क्षत्यभावेन तदा प्रतियोगितापदस्य स्वरूपकीर्तनमात्रपरत्वमेवेति ध्येयम् ॥

स्पर्शवत्त्वदलमनर्थकमिति वाच्यम्, रूपासमानाधिकरणां द्रव्यत्वव्याप्यात्मत्वजातिं मनस्त्वजातिं वाऽदायात्मनि मनसि वा अतिव्याप्तिवारणाय तत्सार्थक्यात्। तन्निवेशे तु आत्मत्वमनस्त्वादौ स्पर्शसामानाधिकरण्यस्याभावात् नातिव्याप्तिः। तथाच समवायसम्बन्धावच्छिन्नरूपत्वातिरिक्तधर्मावच्छिन्नप्रतियोगिताकाभावनिष्ठस्वरूपसम्बन्धावच्छिन्नाधेयतानिरूपितनिरवच्छिन्नाधिकरणताश्रयत्वे सति समवायसम्बन्धावच्छिन्नस्पर्शत्वावच्छिन्नाधेयतानिरूपिताधिकरणतावद्वृत्तिद्रव्यत्वाधिकरणवृत्तिभेदप्रतियोगितावच्छेदकीभूतजातिमत्वम्, रूपासमानाधिकरणा (रूपनिष्ठाधेयतानिरूपिताधिकरणतावद्वृत्तिः) स्पर्शसमानाधिकरणा (स्पर्शनिष्ठाधेयतानिरूपिताधिकरणतावद्वृत्तिः) द्रव्यत्वव्याप्या (द्रव्यत्वाधिकरणवृत्तिभेदप्रतियोगितावच्छेदकीभूता) या जातिः तादृशजातिमत्वम्, इति वा पर्यवसन्नं वायोर्लक्षणं बोध्यम्। त्वगिन्द्रियलक्षणंतु स्पर्शविषयकप्रत्यक्षजनकत्वे सति इन्द्रियत्वमिति बोध्यम्। स्पर्शविषयकं यत् प्रत्यक्षं अयमुष्णः अयं शीतः इत्यकारकं प्रत्यक्षं, तादृशप्रत्यक्षजनकत्वे सतीन्द्रियत्वस्य त्वगिन्द्रिये सत्वात्समन्वयः। विशेष्यमात्रोपादाने चक्षुरादौ विशेषणमात्रोपादाने आत्मनि च अतिव्याप्तिः इत्युभयोपादानम्। अन्यत्सर्वं पृथिवीलक्षणवत् बोध्यम्॥

**मू॰* शब्दगुणकमाकाशं, तच्चैकं विभु नित्यञ्च॥**

आकाशं लक्षयति शब्दगुणकमिति, अत्र गुणपदं गगने शब्द एक एव विशेषगुणोऽस्तीति द्योतनायैव, नतु दोषवारणाय प्रयुक्तम्।



शब्दबोधः शब्दाभिन्नगुणाश्रयाभिन्नमिति। शब्दनिष्ठाधेयतानिरूपिताधिकरणताश्रयत्वं आकाशस्य लक्षणं, शब्दनिष्ठा याऽधेयता आकाशे शब्दोऽस्तीत्याकारकप्रतीतिसिद्धा शब्दनिष्ठाधेयता, तन्निरूपिता या अधिकरणता आकाशनिष्ठाऽधिकरणता, तदाश्रयत्वमाकाशे वर्तत इति लक्षणसमन्वयः। अत्रापि कालिकसम्बन्धावच्छिन्नाधेयतामादाय काले गुणत्वावच्छिन्नाधेयतामादाय जलादौ चातिव्याप्तिवारणाय क्रमेण समवायसम्बन्धावच्छिन्नत्वशब्दत्वावच्छिन्नत्वयोः शब्दनिष्ठाधेयतायां विशेषणत्वमङ्गीकार्यम्। उत्पन्नविनष्टाकाशस्याभावेन अव्याप्तिप्रसक्त्यभावेन जातिघटितलक्षणकरणावश्यकता नास्ति। तथाच, समवायसम्बन्धावच्छिन्नशब्दत्वावच्छिन्नाधेयतानिरूपिताधिकरणताश्रयत्वं आकाशस्य लक्षणमिति फलितम्। तच्चैकमिति, एकत्वञ्चात्र स्वसजातीयधर्म्यन्तररहितत्वं आकाशत्वसमानाधिकरणोभयावृत्तिधर्मावच्छिन्नप्रतियोगिताकभेदशून्यत्वं वा विवक्षणीयम्। विभ्विति, सर्वमूर्तद्रव्यसंयोगित्वं विभुत्वं, पृथिव्यप्तेजोवायुमनोरूपसर्वमूर्तद्रव्यसंयोगित्वस्य सत्वात्समन्वयः। नित्यत्वमुपदर्शितमेव॥

**मूलम्* अतीतादिव्यवहारहेतुः कालः, स चैको विभुर्नित्यश्च॥**

कालं लक्षयति अतीतादीति। अतीतादेः व्यवहारः तस्य हेतुः इत्यतीतादिव्यवहारहेतुः अतीतादेरित्यत्र षष्ठ्याः विषयतानिरूपकत्वं व्यवहारस्येत्यत्र षष्ठ्याः आधेयत्वञ्चार्थः, हेतुः कार्यतानिरूपितकारण-

तावान्, षष्ठचर्थधेयत्वस्य कार्यतायामन्वयः, तथाच, अतीतादिविषयक-व्यवहारनिष्ठकार्यतानिरूपितकारणताश्रयत्वं कालस्य लक्षणमिति फलितम्, व्यवहारश्शब्दप्रयोगः। अतीतादिव्यवहारनिष्ठा या कार्यता अयमतीतः अयमनागतः अयं वर्तमानः इत्याकारकशब्दप्रयोगे विद्यमाना कार्यता, तन्निरूपिता या कारणता (व्यवहारे व्यवहर्तव्यतावच्छेदकस्य कारणत्वेन) अतीतादिकालनिष्ठा कारणता, तदाश्रयत्वस्य सर्वत्रापि काले सत्वात् समन्वयः। अतीतादिपदं विहाय व्यवहारहेतुत्वमात्रोक्तौ व्यवहारे व्यवहर्तव्यस्यापि कारणत्वेन घटोऽस्तीत्याकारकव्यवहारहेतुत्वस्य घटादावपि सत्वात्तत्रातिव्याप्तिः, नच अतीतादिपदनिवेशेपि व्यवहर्तव्ये घटादौ अतीतादिव्यवहारहेतुत्वस्याबाधितत्वेन तद्दोषतादवस्थ्यमेवेति वाच्यम्, अतीतादि व्यवहारनिष्ठकार्यतानिरूपितकारणतावज्ज्ञानीय (ज्ञाननिरूपित) मुख्यविशेष्यतानिरूपितप्रकारताश्रयत्वमिति लक्षणं परिष्करणीयम्। अतीतादिव्यवहारनिष्ठकार्यतानिरूपितकारणतावत् यत् ज्ञानं अतीतकालविशिष्टो घटः इत्यादिज्ञानं, तन्निरूपितघटादिनिष्ठमुख्यविशेष्यतानिरूपितप्रकारताश्रयत्वस्य अतीतादिकाले सत्वेन अन्यत्राभावेन च नातिव्याप्तिः लक्षणसमन्वयश्च। आदिपदाभावे अतीतव्यवहारहेतुत्वस्यानागतवर्तमानकालयोः अभावेनाव्याप्तिः, आदिपदनिवेशे तु आदिपदेनानागतादिकालस्यापि ग्राह्यतया अतीतादिव्यवहारान्यतमहेतुत्वस्य काले सर्वत्रापि सम्भवात् नाव्याप्तिः। तथाच, अतीतादिव्यवहारनिष्ठकार्यतानिरूपितकारणतावज्ज्ञानीयमुख्यविशेष्यतानिरूपितप्रकारताश्रयत्वमिति लक्षणं फलितम्। अतएव कालेश्वरादृष्टादीनां कार्यमात्रं



प्रति साधारणकारणत्वेन अतीतादिव्यवहारहेतुत्वस्यापि सत्वात्तत्रातिव्याप्तिवारणाय अतीतादिव्यवहारत्वावच्छिन्नाकार्यतानिरूपितकारणताश्रयत्वमिति अतीतादिव्यवहारासाधारणकारणत्वं लक्षणं वक्तव्यम् इत्यपास्तम्। अन्यत्सर्वं गगनलक्षणवद्बोध्यम्॥

**मू॰ प्राच्यादिव्यवहारहेतुः दिक्, सा चैका विभ्वी नित्या च॥**

दिशं लक्षयति प्राच्यादीति। शाब्दबोधः काललक्षण इव ज्ञेयः। प्राच्यादिव्यवहारनिष्ठकार्यतानिरूपितकारणताश्रयत्वं दिशो लक्षणम्, प्राच्यादिव्यवहारनिष्ठा या कार्यता अयं प्राच्यः अयं प्रतीच्यः अयमुदीच्यः अयमवाच्यः इत्याकारकव्यवहारे विद्यमाना कार्यता, तन्निरूपिता या कारणता प्राच्यादिदिक्षु विद्यमाना कारणता, तदाश्रयत्वं दिक्षु वर्तते इति समन्वयः। अत्रापि व्यवहारहेतुत्वमात्रोक्तौ घटेऽतिव्याप्तिः। आदिपदाभावे प्रतीच्यादिदिक्षु अव्याप्तिः। पूर्ववद्घटादावतिव्याप्तिवारणाय प्राच्यादिव्यवहारनिष्ठकार्यतानिरूपितकारणतावज्ज्ञानीयमुख्यविशेष्यतानिरूपितप्रकारताश्रयत्वं निष्कृष्टलक्षणं बोध्यम्। एकत्वादिकं गगनलक्षणवद्बोध्यम्॥

**मू॰ ज्ञानाधिकरणमात्मा, स द्विविधः, परमात्मा जीवात्मा चेति, तत्रेश्वरः सर्वज्ञः परमात्मा एक एव, जीवस्तु प्रतिशरीरं भिन्नो विभुर्नित्यश्च॥**

---

जीवस्तु प्रतिशरीरं भिन्न इत्यत्र॥ ननु प्रतिद्रव्यं सत्वेऽपत्र सत्तायां द्रव्यत्वव्यापकत्वस्येव अत्रापि आत्मभेदे शरीरत्वव्यापकत्वस्य

आत्मानं लक्षयति ज्ञानाधिकरणमिति। अत्राधिकरणपदं समवायेन ज्ञानाश्रयत्वलाभाय, नत्वतिव्याप्त्यादिदोषवारणाय। ज्ञानस्याधिकरणं ज्ञानाधिकरणम्, अधिकरणपदस्याधेयतानिरूपिताधिकरणतावानर्थः षष्ठ्यर्थः आधेयत्वम्, अस्य च आधेयतायामन्वयः। तथाच, ज्ञाननिष्ठाधेयतानिरूपिताधिकरणताश्रयत्वं आत्मनो लक्षणम्, ज्ञाननिष्ठा याऽधेयता अहं जानामि इत्याकारकप्रतीतिसिद्धा ज्ञाननिष्ठाऽधेयता तन्निरूपिता याऽधिकरणता आत्मनिष्ठाधिकरणता तदाश्रयत्वम् आत्मनि वर्तते इति लक्ष्ये लक्षणसमन्वयः। कालिकसम्बन्धावच्छिन्नज्ञाननिष्ठाधेयतां गुणत्वावच्छिन्नाधेयतां च आदाय कालादावतिव्याप्तिवारणाय समवायसम्बन्धावच्छिन्नत्वं ज्ञानत्वावच्छिन्नत्वञ्च ज्ञाननिष्ठाधेयतायां विशेषणं देयम्। उत्पन्नविनष्टस्यात्मनः अभावेन तत्र अव्याप्तिवारणाय जातिघटितलक्षणं न कर्तव्यम्। तथाच, समवायसम्बन्धाव-

---

भानमङ्गीकार्यम्, तादृशभानाङ्गीकारे तु आत्मशरीरयोः भेदस्य स्वतःसिद्धत्वेन जीवात्मनः एकत्वेऽपि शरीरत्वव्यापकत्वस्य जीवात्मभेदेऽक्षतत्वेन शरीरभेदेन जीवभेदबोधकत्वं अस्य वाक्यस्य न सम्भवतीति-चेन्न, अत्र प्रतिपदसमभिव्याहृतशरीरपदस्य स्वावच्छेदकयत्किञ्चिच्छरीरभेदव्यापकत्वमर्थः, तस्य भेदेऽन्वयः, तथाच, स्वावच्छेदकयत्किञ्चिच्छरीरभेदव्यापकभेदप्रतियोगी जीवात्मेति बोधः, अत्र स्वाश्रयशरीरत्वव्याप्यतावच्छेदकसम्बन्धः स्वाश्रयावच्छेदकत्वं व्यापकतावच्छेदकसम्बन्धः। एषा पट्टाभिरामप्रदर्शिता रीतिः॥



च्छिन्नज्ञानत्वावच्छिन्नाधेयतानिरूपिताधिकरणताश्रयत्वमात्रं आत्मनो निष्कृष्टं लक्षणं बोध्यम्। आत्मानं विभजते स द्विविध इति, नित्यज्ञानाधिकरणत्वमीश्वरत्वं, तत्तद्व्यक्तित्वेन सर्वविषयकज्ञानाश्रयत्वं सर्वज्ञत्वम्। जीवस्य शरीरभेदेन भेदः सुखदुःखादिवैलक्षण्येनाङ्गीकार्यः। जीवानां विभुत्वनित्यत्वाङ्गीकारप्रयोजनं दीपिकायां विशदीकृतम्॥

मूलम्* सुखाद्युपलब्धिसाधनमिन्द्रियं मनः, तच्च
प्रत्यात्मनियतत्वादनन्तं परमाणुरूपं नित्यञ्च॥

मनो लक्षयति सुखादीति। शाब्दबोधः काललक्षण इव बोध्यम्। उपलब्धिर्नाम प्रत्यक्षम्। तथाच, सुखादिविषयकप्रत्यक्षनिष्ठकार्यतानिरूपितकारणताश्रयत्वे सति इन्द्रियत्वं मनसो लक्षणम्। सुखादिविषयकं यत्प्रत्यक्षं अहं सुखी अहं दुःखीत्याकारकं प्रत्यक्षं, तत्कारणत्वे सति इन्द्रियत्वस्य मनसि सत्त्वात् समन्वयः। इन्द्रियत्वमात्रोक्तौ चक्षुरादौ इन्द्रियत्वानुपादाने आत्मनि च अतिव्याप्तिः इत्युभ-

---

प्रत्यात्मनियतत्वादनन्तमित्यत्र॥ प्रतिपदसमभिव्याहृतात्मपदस्य आत्मत्वव्यापकसंख्यासजातीयमर्थः, नियतत्वञ्च संख्यावत्त्वम्, संख्यासाजात्यञ्च बहुत्वत्वव्याप्यजात्या बोध्यम्। संख्यावत्त्वञ्च संख्यापर्याप्त्यधिकरणत्वं ग्राह्यम्। अन्यथा, मनसः एकत्वेऽपि आत्ममनस्साधारणसंख्यामादाय मनसि तादृश संख्यावत्त्वमापाद्येत। तथाच, आत्मत्वव्यापकसंख्यासजातीयसंख्यापर्याप्त्यधिकरणत्वं प्रत्यात्मनियतत्वमिति सिद्धम्॥ अतः संख्यात्वव्याप्यधर्मावच्छिन्नप्रकारतानिरूपिता या

योपादानम् । तथाच, सुखादिविषयकप्रत्यक्षनिष्ठकार्यतानिरूपितकारणताश्रयत्वे सति इन्द्रियत्वं मनसो निष्कृष्टं लक्षणम् । तच्चेति, एकैकस्यात्मनः एकैकं मन इत्यात्मनामनेकत्वात् मनसोप्यनेकत्वं ज्ञेयम् । मनसः अनन्तत्वपरमाणुरूपत्वनित्यत्वानां प्रयोजनं दीपिकायां व्यक्तीकृतम् । द्रव्यमेवं निरूपितम् ॥

**मूलम्* चक्षुर्मात्रग्राह्यो गुणो रूपम्, तच्च शुक्ल नीलपीतरक्तहरितकपिशचित्रभेदात् सप्तविधम् पृथिवीजलतेजोवृत्ति, तत्र पृथिव्यां सप्तविधम् अभास्वरशुक्लं जले, भास्वरशुक्लं तेजसि ॥**

---

असमदादिनिश्चयीया विशेष्यता तच्छून्यत्वं आनन्त्यम् । एषापि पट्टाभिरामप्रदर्शिता रीतिरेव ॥

सुखाद्युपलब्धिसाधनमिन्द्रियं मन इत्यत्र ॥ ननु सुखाद्युपलब्धिसाधनमिन्द्रियं इति मनोलक्षणे इन्द्रियत्वस्य ज्ञानकारणमनस्संयोगाश्रयत्वघटितेन्द्रियलक्षणे मनस्त्वस्य च प्रविष्टत्वेन अन्योन्याश्रयदोषप्रसंग इति वाच्यम्, मनस्त्वस्य जातित्वेन इन्द्रियत्वस्य शब्देतरोद्भूतगुणानाश्रयत्वविशिष्टज्ञानकारणमनस्संयोगाश्रत्वरूपतया इन्द्रियत्वग्रहस्य स्वपदग्राह्यमनस्त्वग्रहाधीनत्वेपि मनस्त्वग्रहस्य इन्द्रियत्वग्रहाधीनत्वाभावेन स्वग्रहाधीनग्रहाधीनस्वग्रहविषयत्वाभावेनात्रान्योन्याश्रयदोषो नास्ति । सुखाद्युपलब्धिसाधनत्वविशिष्टेन्द्रियत्वं मनोलक्षणमेव, न मनस्त्वरूपम्, नातः मनस्त्वग्रहस्य इन्द्रियत्वग्रहाधीनतेति तद्दोषप्रसक्तिः ॥

गन्धग्राहकं घ्राणं घ्राणग्राह्यो गुणो गन्धः, रसग्राहकं रसनम्



अथ गुणाः निरूप्यन्ते ॥ रूपं लक्षयति चक्षुर्मात्रग्राह्येति, चक्षुर्मात्रेण ग्राह्यः चक्षुर्मात्रग्राह्यः, अत्र मात्रपदस्य इतरयोगो व्यवच्छेदश्चार्थः, इतरपदार्थैकदेशेतरत्वे चक्षुःपदार्थस्य प्रतियोगितानिरूपकत्वसम्बन्धेनान्वयः, योगोऽत्र प्रत्यक्षविषयत्वं, इतरपदार्थस्य जन्यत्वसम्बन्धेन प्रत्यक्षेऽन्वयः, तादृशविषयत्वस्य च व्यवच्छेदरूपाभावे अन्वयः, मात्रेणेत्यत्र तृतीयायाः जन्यत्वमर्थः, ग्रहधातोः प्रत्यक्षज्ञानं ण्यप्रत्ययस्य विषयत्वञ्चार्थः, तथाच, चक्षुर्भिन्नेन्द्रियजन्यप्रत्यक्षाविषयत्वे सति चक्षुरिन्द्रियजन्यप्रत्यक्षविषयत्वे सति गुणत्वं रूपस्य लक्षणमिति फलितम् । (चक्षुर्मात्रेण ग्राह्यः चक्षुर्मात्रग्राह्यः, अत्र तृतीयायाः जन्यत्वं, ग्रहधातोः प्रत्यक्षज्ञानं, ण्यप्रत्ययस्य विषयत्वञ्चार्थः, मात्रपदस्य चक्षुर्भिन्नेन्द्रियजन्यप्रत्यक्षाविषयत्वमर्थः, तथाच, चक्षुर्भिन्नेन्द्रियजन्यप्रत्यक्षाविषयत्वे सति चक्षुरिन्द्रियजन्यप्रत्यक्षविषयत्वे सति गुणत्वं रूपस्य लक्षणमिति

---

रसनग्राह्यो गुणो रसः, रूपग्राहकं चक्षुः चक्षुर्मात्रग्राह्यो गुणो रूपं, स्पर्शग्राहकं त्वक् त्वगिन्द्रियमात्रग्राह्यो गुणः स्पर्शः, इत्यादि लक्षणेषु च गन्धत्वादीनां जातित्वेन गन्धग्राहकत्वादीनां घ्राणादिलक्षणत्वेन च मनोलक्षण इव अन्योन्याश्रयदोषप्रसक्तिः वारणीया ॥

रूपलक्षणे ॥ त्वगिन्द्रियजन्यप्रत्यक्षाविषयत्वे सति प्रत्यक्षविषयत्वे सति गुणत्वमिति एतावन्मात्रोक्तौ ईश्वरीयप्रत्यक्षविषयतामादाय रसादावतिव्याप्तिः । तद्वारणाय जन्यप्रत्यक्षविषयत्वमिति लक्षणकरणेपि योगजप्रत्यक्षविषयतामादाय पुनः रसादावतिव्याप्तिः । तद्वारणाय

फलितम्) चक्षुर्भिन्नं यदिन्द्रियं त्वगिन्द्रियं, तज्जन्यं यत्प्रत्यक्षं अयमुष्णः अयंशीतः इत्याकारकं प्रत्यक्षं, तद्विषयत्वं स्पर्शे वर्तते, तदविषयत्वं रूपे वर्तते, एवं चक्षुरिन्द्रियजन्यं यत्प्रत्यक्षं अयं नीलः अयं पीतः इत्याकारकं प्रत्यक्षं, तद्विषयत्वं गुणत्वञ्च रूपेऽस्तीति लक्षणसमन्वयः। गुणत्वमात्रोक्तौरसादावपि गुणत्वस्य सत्वात्तत्रातिव्याप्तिः, तद्वारणाय विशेषणोपादानं, तन्निवेशे रसादौ गुणत्वस्य सत्वेपि चक्षुर्मात्रग्राह्यत्वस्याभावान्नातिव्याप्तिः। गुणत्वानुपादाने येनेन्द्रियेण या व्यक्तिः गृह्यते तेनेन्द्रियेण तन्निष्ठा जातिः तदभावश्च गृह्यते, इति न्यायेन रूपस्य चक्षुर्मात्रग्राह्यत्वे रूपत्वरूपाभावयोरपि चक्षुर्मात्रग्राह्यत्वात् तयोरतिव्याप्तिः, तद्वारणाय गुणत्वं, तन्निवेशे तु रूपत्वस्य जातित्वेन रूपाभावस्याभावत्वेन तत्र गुणत्वस्याभावात् नातिव्याप्तिः। मात्रपदानुपादाने (चक्षुर्भिन्नेन्द्रियजन्यप्रत्यक्षाविषयत्वानुपादाने) चक्षुरिन्द्रियजन्यं यत्प्रत्यक्षं अयमेकः इमौद्वौ इत्याकारकं प्रत्यक्षं, तद्विषयत्वं गुणत्वञ्च संख्यायामस्तीत्यतिव्याप्तिः, तद्वारणाय मात्रपदं, तन्निवेशे तु चक्षुर्भिन्नेन्द्रियं त्वगिन्द्रियं, तज्जन्यं यत्प्रत्यक्षं अयमेकः इमौ द्वौ इत्याकारकं प्रत्यक्षं, तद्विषयत्वस्यैव संख्यायां वर्तमानत्वेन तदविषयत्वस्य तत्राभावान्नातिव्याप्तिः। चक्षुरिन्द्रियजन्यप्रत्यक्षविषयत्वानुपादाने धर्माधर्मादेरतीन्द्रियत्वेन चक्षुर्भिन्नत्वगादीन्द्रियजन्यप्रत्यक्षाविषयत्वस्य गुणत्वस्य च तयोः विद्यमानत्वात् अतिव्याप्तिः, तद्वारणाय चक्षुरिन्द्रियजन्यप्रत्यक्षविषयत्वदळं निवेशनीयम्, तन्निवेशे चक्षुरिन्द्रियजन्यप्रत्यक्षं रूपादिविषयकं प्रत्यक्षमेव, नतु धर्माधर्मविषयकं प्रत्यक्षं, तयोरतीन्द्रियत्वात्, अतः तद्विषयत्वस्य धर्माधर्मादावभावात् नातिव्याप्तिः। एवमपि

---

इन्द्रियजन्यप्रत्यक्षविषयत्वमिति लक्षणकरणेऽपि रासनप्रत्यक्षविषयतामादाय रसादावतिव्याप्तिः। अतः चक्षुरिन्द्रियजन्यप्रत्यक्षविषयत्वरूपस्य (कृत्स्नस्यापि) दळस्य आवश्यकता अस्त्येव ॥

अस्मिन्नेव लक्षणे, चक्षुर्ग्राह्यत्वदळे प्रत्यक्षत्वेन प्रत्यक्षं अप्रवेश्य त्वगिन्द्रियजन्यप्रत्यक्षाविषयत्वे सति चक्षुरिन्द्रियजन्यज्ञानविषयत्वे सति गुणत्वमिति लक्षणे ज्ञायमानलिङ्गस्य करणतावादिमते रूपं स्वेतरभिन्नं (त्वगग्राह्यत्वविशिष्टगुणत्वे सति) ग्राह्यत्वसम्बन्धेन चक्षुरिन्द्रियात् इत्याद्यनुमानहेतुभूतचक्षुरिन्द्रियजन्यानुमित्यात्मकज्ञानविषयतामादाय रूपेतररसादिगुणेषु अतिव्याप्तिः, अतः तद्दळे प्रत्यक्षत्वावच्छिन्नस्य प्रवेशः कार्यः ॥ मात्रपदार्थे प्रत्यक्षत्वावच्छिन्नमप्रवेश्य त्वगिन्द्रियजन्यज्ञानविषयत्वे सति चक्षुरिन्द्रियजन्यप्रत्यक्षविषयत्वे सति गुणत्वमिति लक्षणकरणे स्पर्शः स्वेतरभिन्नः (चक्षुरग्राह्यत्वविशिष्टगुणत्वे सति) ग्राह्यत्वसम्बन्धेन त्वगिन्द्रियात् इत्याद्यनुमानहेतुभूतत्वगिन्द्रियजन्यानुमितिविषयतामादाय पूर्वमतानुसारेण असम्भवः, अतः मात्रपदार्थघटकतयाऽपि प्रत्यक्षत्वावच्छिन्नस्य प्रवेशः कार्यः ॥ त्वगिन्द्रियपदं विहाय प्रत्यक्षाविषयत्वमिति वा जन्यप्रत्यक्षाविषयत्वमिति वा लक्षणकरणे चाक्षुषादिप्रत्यक्षमादाय असम्भवप्रसङ्गः, अतः त्वगिन्द्रियजन्यप्रत्यक्षाविषयत्वपर्यन्तस्य तद्दळस्य आवश्यकता अस्त्येव ॥ चक्षुरिन्द्रियजन्यप्रत्यक्षविषयत्वमित्यत्र प्रत्यक्षं लौकिकं

ज्ञानमात्रस्य मनोजन्यत्वेन चक्षुर्भिन्नमनइन्द्रिजन्यप्रत्यक्षविषयत्वस्यैव रूपे सत्वेन अविषयत्वस्याभावात् असम्भवः, तद्वारणाय चक्षुर्भिन्नेन्द्रियपदं त्वगिन्द्रियपरमिति वक्तव्यं, तथाच त्वगिन्द्रियजन्यप्रत्यक्षाविषयत्वे सति चक्षुरिन्द्रियजन्यप्रत्यक्षविषयत्वे सति गुणत्वं रूपस्य लक्षणं फलितम्, तथाच चक्षुर्भिन्नमनइन्द्रियंजन्यप्रत्यक्षविषयत्वस्य सत्वेऽपि त्वगिन्द्रिय-जन्यप्रत्यक्षविषयत्वस्याभावेन नासम्भवः ॥

**मू॰* रसनग्राह्यो गुणो रसः, सच मधुराम्ललवणकटुकषायतिक्तभेदात् षड्विधः, पृथिवीजलवृत्तिः, तत्र पृथिव्यां षड्विधः, जले तु मधुर एव ॥**

---

ग्राह्यम्, अन्यथा ज्ञातो घटः इत्याकारकं ज्ञानलक्षणाद्यलौकिकसन्निकर्ष-जन्यप्रत्यक्षं आदाय ज्ञानादौ अतिव्याप्तिः । नच लौकिकत्वनिवेशेऽपि घटांशे तत्ज्ञानस्य लौकिकत्वेन अतिव्याप्तिः तदवस्थैवेति वाच्यम्, प्रत्यक्षविषयतायां लौकिकसन्निकर्षप्रयोज्यत्वस्य निवेशनीयत्वात्, ज्ञान-निष्ठविषयतायाः लौकिकसन्निकर्षप्रयोज्यत्वाभावेनातिव्याप्त्यभावात् । अथवा प्रत्यक्षे लौकिकत्वं अलौकिक प्रत्यक्षभिन्नत्वरूपं विवक्षणीयम्, ज्ञातो घट इति ज्ञानस्य अलौकिकभिन्नत्वाभावात् नातिव्याप्तिः ॥ त्वगिन्द्रियजन्यप्रत्यक्षाविषयत्वमित्यत्रापि प्रत्यक्षं लौकिकं ग्राह्यम्, अन्यथा, रूपवान् वह्निः उष्णः इत्याद्यलौकिकप्रत्यक्षमादाय असम्भवः ॥ तथाच त्वगिन्द्रियजन्यप्रत्यक्षनिरूपितलौकिकविषयत्वाभाववत्वे सति चक्षुरिन्द्रियजन्यप्रत्यक्षनिरूपितलौकिकविषयता (लौकिकसन्निकर्षप्रयोज्य-विषयता) श्रयत्वे सति गुणत्वं रूपलक्षणं बोध्यम् ॥ एवमन्यत्रापि सदृशस्थलेषु यथायथमूह्यम् ॥



रसं लक्षयति रसनेति । रसनेन ग्राह्यः रसनग्राह्यः-तृतीयायाः जन्यत्वं, ग्रहधातोः प्रत्यक्षज्ञानं, ण्यप्रत्ययस्य विषयत्वञ्चार्थः । तथाच रसनेन्द्रियजन्यप्रत्यक्षविषयत्वे सति गुणत्वं रसस्य लक्षणमितिफलितम्, तथाच रसनेन्द्रियजन्यं यत्प्रत्यक्षं अयंमधुरः अयमाम्लः इत्याकारकं प्रत्यक्षं, तद्विषयत्वस्य गुणत्वस्य च रसे सत्वात् लक्षणसमन्वयः । गुणत्वमात्रोक्तौ रूपादौ गुणत्वानुपादाने रसत्वरसाभावयोश्च अतिव्याप्तिः, अतः दळद्वयोपादानम् ॥

**मू॰* घ्राणग्राह्यो गुणो गन्धः, स द्विविधः, सुरभिरसुरभिश्चेति, पृथिवीमात्रवृत्तिः ॥**

गन्धं लक्षयति घ्राणेति । शाब्दबोधः रसलक्षणवत् ग्राह्यः । घ्राणेन्द्रियजन्यप्रत्यक्षविषयत्वे सति गुणत्वं गन्धस्य लक्षणं, घ्राणेन्द्रिय-जन्यं यत्प्रत्यक्षं अयंसुरभिः अयमसुरभिः इत्याकारकं प्रत्यक्षं, तादृश-प्रत्यक्षविषयत्वे सति गुणत्वस्य गन्धे सत्वात् लक्षणसमन्वयः । गुणत्व-मात्रोक्तौ रूपादौ गुणत्वानुपादाने गन्धत्व गन्धाभावयोश्च अतिव्याप्तिः, अतो दळद्वयोपादानम् ॥

**मू॰* त्वगिन्द्रियमात्रग्राह्यो गुणः स्पर्शः, सत्रिविधः शीतोष्णानुष्णाशीतभेदात् पृथिवीजल-तेजोवायुवृत्तिः, तत्र शीतं जले, उष्णस्तेजसि, अनुष्णाशीतः पृथिवीवाय्वोः, रूपादिचतुष्टयं पृथिव्यां पाकजमनित्यञ्च, अन्यत्रापाकजं नित्यमनित्यञ्च, नित्यगतं नित्यं, अनित्यगतमनित्यम् ॥**

स्पर्शं लक्षयति त्वगिन्द्रियेति। शाब्दबोधप्रकारः रूपलक्षण इव बोध्यः। त्वग्भिन्नेन्द्रियजन्यप्रत्यक्षाविषयत्वे सति त्वगिन्द्रियजन्यप्रत्यक्षविषयत्वे सति गुणत्वं स्पर्शस्य लक्षणम्, त्वग्भिन्नं यदिन्द्रियं चक्षुरिन्द्रियं, तज्जन्यं यत्प्रत्यक्षं अयंनीलः अयंपीतः इत्याकारकं प्रत्यक्षं, तद्विषयत्वं रूपे वर्तते, अविषयत्वं स्पर्शे वर्तते, त्वगिन्द्रियजन्यं यत्प्रत्यक्षं अयमुष्णः अयंशीतः इत्याकारकं प्रत्यक्षं, तद्विषयत्वं गुणत्वञ्च स्पर्शेऽस्तीति लक्षणसमन्वयः। गुणत्वमात्रोक्तौ रूपादावतिव्याप्तिः। गुणत्वानुपादाने येनेन्द्रियेण इति न्यायेन स्पर्शत्वस्पर्शाभावयोः अतिव्याप्तिः। मात्रपादानुपादाने संख्यादावतिव्याप्तिः। त्वग्भिन्नेन्द्रियजन्यप्रत्यक्षाविषयत्वे सति गुणत्वमात्रोक्तौ धर्माधर्मादावतिव्याप्तिः, अतः दळत्रयोपादानम्। त्वग्भिन्नेन्द्रियपदेन मनइन्द्रियमादाय पूर्ववदसम्भववारणाय चक्षुरिन्द्रियजन्यप्रत्यक्षाविषयत्वे सति त्वगिन्द्रियजन्यप्रत्यक्षविषयत्वे सति गुणत्वं स्पर्शस्य लक्षणमिति वक्तव्यम्।

रूपरसगन्धस्पर्शलक्षणेषु चतुर्षु च परमाणुगतेषु रूपरसगन्धस्पर्शेषु तत्तदिन्द्रियग्राह्यत्वस्याभावेनाव्याप्तिवारणाय जातिघटितलक्षणपरिष्कारः कर्तव्यः। तत्प्रकारश्च, त्वगिन्द्रियजन्यप्रत्यक्षविषयतानवच्छेदकीभूता चक्षुरिन्द्रियजन्यप्रत्यक्षविषयतावच्छेदकीभूता या जातिः तद्वत्त्वे सति गुणत्वमिति रूपलक्षणे, रसनेन्द्रियजन्यप्रत्यक्षविषयतावच्छेदकीभूतजातिमत्त्वे सति गुणत्वमिति रसलक्षणे, घ्राणेन्द्रियजन्यप्रत्यक्षविषयतावच्छेदकजातिमत्त्वे सति गुणत्वमिति गन्धलक्षणे, चक्षुरिन्द्रियजन्यप्रत्यक्षविषयतानवच्छेदकीभूता त्वगिन्द्रियजन्यप्रत्यक्षविषयतावच्छेदकीभूता या जातिः तद्वत्त्वे सति गुणत्वमिति स्पर्शलक्षणे च ग्राह्यः॥ रूपादिचतुष्टयं पृथिव्यां पाकजमिति, अत्र पृथिव्यामिति पृथिवीसामान्यबोधकशब्दोपादानेन नित्यपृथिव्यामनित्यपृथिव्याञ्च विद्यमानं रूपादिचतुष्टयं पाकजन्यत्वेन, यज्जन्यं तदनित्यं इति व्याप्त्या अनित्यं भवतीति ज्ञायते, जलादौ विद्यमानस्य रूपादेः पाकजन्यत्वाभावेन सर्वत्रापि विद्यमानस्य तस्य नानित्यत्वनियमः, किन्तु नित्यगतं चेत् आश्रयस्य नित्यत्वेन आधेयस्य तस्यापि नित्यत्वं,

---

ननु रूपादिचतुष्टयलक्षणेषु परमाणुरूपादिचतुष्टयेऽव्याप्तिवारणाय जातिघटितत्वपरिष्कारस्यावश्यं कर्तव्यतया तल्लक्षणचतुष्टये च एतावतैव रूपत्वरसत्वादिजातिषु अतिव्याप्तिप्रसक्त्यभावेन गुणत्वदळस्य वैयर्थ्यमिति वाच्यम्, रूपलक्षणे सुवर्णत्वजातिमादाय सुवर्णेऽतिव्याप्तिवारणाय वायोरूष्मणश्च प्रत्यक्षतावादिमते स्पर्शलक्षणे वायुत्वजातिमूष्मत्वजातिंवाऽऽदाय वायूष्मणोश्च दोषवारणाय गुणपदसार्थक्यात् रसलक्षणे मधुररसवत्फलं इति प्रत्यक्षविषयफलत्वजातिमादाय गन्धलक्षणे सुरभि कुसुमं इति प्रत्यक्षविषयकुसुमत्वजातिं च आदाय फलकुसुमयोरतिव्याप्तिवारणाय च गुणपदसार्थक्यात्। नच रसगन्धलक्षणयोः विषयतायां (लौकिकसन्निकर्षप्रयोज्यत्वस्य तत्तदिन्द्रियप्रयोज्यत्वस्य निवेशेनैव फलकुसुमादावतिव्याप्त्यभावेन गुणपदवैयर्थ्यं दुर्वारमेवेति वाच्यम्, तदा तल्लक्षणद्वये गुणपदस्य स्वरूपकीर्तनमात्रपरत्वमेव इति बोध्यम्॥

अनित्यगतं चेत् आश्रयस्यानित्यत्वेन "आश्रयनाशादाश्रयिनाशः" इति नियमेन आधेयस्य तस्याप्यनित्यत्वं। (आश्रयः समवायिकारणं, आश्रयी समवेतं कार्यम्) अन्यत्रापाकजं नित्यमनित्यञ्चेत्यत्र, रूपादिचतुष्टयपदस्य पूर्वमुपात्तत्वेन सान्निध्यबलात् अन्यत्रेत्यत्रापि तत्पदयोजनमावश्यकं भवति, तथा योजने च अन्यत्र जलादौ रूपादिचतुष्टयं न सम्भवति, कुतः, पृथिव्यां तच्चतुष्टयं, जले गन्धं विहाय त्रयं, तेजसि रसगन्धौ विहाय द्वयं, वायौ स्पर्श एक एव वर्तत इति, अतः रूपादिचतुष्टयपदस्य तच्चतुष्टयघटकमर्थः, तथाच पृथिव्यामन्यत्र च तदन्वेतीति नानुपपत्तिः॥

पृथि० प्रे... -नेव

**मू* एकादिव्यवहारहेतुः संख्या, नवद्रव्यवृत्तिः एकत्वादिपरार्धपर्यन्ता, एकत्वं द्विविधं नित्यमनित्यञ्चेति, नित्यगतं नित्यं, अनित्यगतमनित्यं, द्वित्वादिकन्तु सर्वत्रानित्यमेव॥**

संख्यां लक्षयति एकादीति। संख्यापरिमाणपृथक्त्वसंयोगपरत्वापरत्वलक्षणवाक्यस्थलेषु शाब्दबोधप्रकारः काललक्षण इव ग्राह्यः। एकादिव्यवहारनिष्ठकार्यतानिरूपितकारणताश्रयत्वं संख्यायाः लक्षणम्, एकादिव्यवहारनिष्ठा या कार्यता अयमेकः इमौ द्वौ इत्याकारकव्यवहारनिष्ठा कार्यता, तन्निरूपिता या कारणता एकत्वद्वित्वादिसंख्यायां विद्यमाना कारणता, तदाश्रयत्वस्य एकत्वादिसंख्यायां सर्वत्रापि सत्त्वात्समन्वयः। व्यवहारहेतुत्वमात्रोक्तौ पूर्ववत् घटेऽतिव्याप्तिः। आदिपदाभावे द्वित्वादिसंख्यायामव्याप्तिः। पूर्ववत् घटादावतिव्याप्तिवारणाय एकादिव्यवहारनिष्ठकार्यतानिरूपितकारणतावज्ज्ञानीयमुख्यविशेष्यतानिरूपितप्रकारताश्रयत्वपर्यन्तं लक्षणं परिष्करणीयम्। एकत्वत्वद्वित्वत्वादावतिव्याप्तिवारणाय विशेष्यतायां मुख्यत्वनिवेशः। प्रकारत्वानवच्छिन्नत्वं (प्रकारत्वासमानाधिकरणत्वं) मुख्यत्वं ज्ञेयम्। एकत्वं नित्यगतं नित्यमिति। आश्रयस्य नित्यत्वे आधेयस्यैकत्वस्यापि नित्यत्वम्, यथा, गगनादौ एकत्वम्। आश्रयस्यानित्यत्वे आश्रयनाशानन्तरं आधेयगतमेकत्वमपि नश्यति, यथा, घटादावेकत्वम्। द्वित्वादिकन्तु सर्वत्रानित्यमेवेति। द्वित्वादीनां अयमेकः अयमेकः इत्याकारकापेक्षाबुद्धिजन्यत्वेन (श्लो॥ अनेकैकत्वबुद्धिर्या साऽपेक्षाबुद्धिरुच्यते, इति कारिकावल्यां) अपेक्षाबुद्धेश्च क्षणत्रयमात्रावस्थायित्वेन कारणीभूतायाः अपेक्षाबुद्धेः नाशात् कार्यभूतं द्वित्वादिकमपि नश्यति, नाशकान्तराभावेन अपेक्षाबुद्धिनाशेनैव द्वित्वादिनाशोऽङ्गीकर्तव्यः, अपेक्षाबुद्धितः तस्य नाशानङ्गीकारे कालान्तरे अपेक्षाबुद्धिमन्तरापि चिरस्थायिन्याऽनयैव तत्प्रत्यक्षमुत्पद्येत, अतो नित्यगतं अनित्यगतं वा द्वित्वादिकमनित्यमेवेति सिद्धान्तः॥



**मू* मानव्यवहाराऽसाधारणकारणं परिमाणम्। नवद्रव्यवृत्ति। तच्चतुर्विधं, अणु महत् दीर्घं ह्रस्वञ्चेति॥**

परिमाणं लक्षयति मानव्यवहारेति॥ मानव्यवहारनिष्ठकार्यतानिरूपितकारणताश्रयत्वं परिमाणस्य लक्षणं, मानव्यवहारनिष्ठा या

कार्यता अयमणुः अयंमहान् अयंदीर्घः अयंह्रस्वः इत्याकारकशब्दप्रयोगनिष्ठा कार्यता तन्निरूपितकारणताश्रयत्वं अणुत्वादिपरिमाणेषु वर्तते इति लक्षणसमन्वयः (व्यवहारहेतुत्वघटितलक्षणेषु सर्वत्रापि व्यवहारहेतुत्वमात्रोक्तौ घटादावेवातिव्याप्तिर्बोध्या) असाधारणकारणत्वानिवेशे ईश्वरादृष्टादेः कार्यमात्रं प्रति साधारणकारणत्वेन मानव्यवहारादेरपि कार्यत्वेन तत्कारणत्वस्येश्वरादृष्टादौ सत्वेन तत्रातिव्याप्तिः, अतः असाधारणकारणत्वं निवेशनीयं, तदर्थश्च मानव्यवहारत्वाद्यवच्छिन्न कार्यतानिरूपितकारणताश्रयत्वमिति पर्यवस्यति, ईश्वरादृष्टादेः कार्यमात्रं प्रति साधारणकारणत्वेन मानव्यवहारादिनिष्ठकार्यतानिरूपितकारणताश्रयत्वस्यसत्वेऽपि मानव्यवहारत्वाद्यवच्छिन्नकार्यतानिरूपितकारणताश्रयत्वस्याभावात् नातिव्याप्तिः। अणुत्वादिव्यवहारत्वावच्छिन्नं प्रति प्रत्येकमणुत्वत्वेन महत्वत्वेनच कार्यकारणभावसद्भावात्समन्वयः। (एवमुत्तरत्राप्यसाधारणकारणत्वप्रयोजनं ग्राह्यम्, बुद्धिलक्षणातिरिक्तेषु व्यवहारहेतुत्वघटित लक्षणेषु पूर्ववत् घटादिष्वतिव्याप्तिवारणाय तत्तद्व्यवहारनिष्ठ कार्यतानिरूपितकारणतावज्ज्ञानीयमुख्यविशेष्यतानिरूपितप्रकारताश्रयत्वपर्यन्तं लक्षणं परिष्करणीयमेव, एवं परिष्कृते लक्षणे कालेश्वरादृष्टादावतिव्याप्तिप्रसक्त्यभावेन असाधारणकारणत्वानिवेशेपि न कापि क्षतिः, किन्तु यथाश्रुतलक्षणएव तस्य सार्थक्यमित्यवधेयम्) तद्विभजते अण्विति, अत्र च भावप्रधाननिर्देशः, यथाश्रुतेऽसङ्गत्यापत्तेः, सच धर्मबोधेच्छया धर्मिप्रतिपादनं, भावार्थमुख्यविशेष्यकबोधेच्छयोच्चरितशब्दो वा स इति ज्ञेयम् ॥



**मू* पृथग्व्यवहारासाधारणकारणं पृथक्त्वं, सर्वद्रव्यवृत्ति ॥**

पृथक्त्वं लक्षयति पृथगिति ॥ पृथग्व्यवहारनिष्ठकार्यतानिरूपितकारणताश्रयत्वं पृथक्त्वस्य लक्षणम्। पृथग्व्यवहारनिष्ठा या कार्यता अयमस्मात्पृथगिति व्यवहारनिष्ठा कार्यता, तन्निरूपितकारणताश्रयत्वं पृथक्त्वे वर्तत इति लक्षणसमन्वयः। अन्यत्सर्वं पूर्ववत् बोध्यम्।

**मू* संयुक्तव्यवहारहेतुस्संयोगः, सर्वद्रव्य वृत्तिः ॥**

संयोगं लक्षयति संयुक्तेति ॥ संयुक्तव्यवहारनिष्ठकार्यतानिरूपितकारणताश्रयत्वं संयोगस्य लक्षणं, संयुक्तव्यवहारनिष्ठा या कार्यता इमौ संयुक्तौ इति व्यवहारनिष्ठा कार्यता, तन्निरूपितकारणताश्रयत्वं संयोगेऽस्तीति समन्वयः। अन्यत्सर्वं पूर्ववत् ॥

**मू* संयोगनाशको गुणो विभागः, सर्वद्रव्य वृत्तिः ॥**

विभागं लक्षयति संयोगेति ॥ संयोगस्य नाशकः संयोगनाशकः, षष्ठ्याः प्रतियोगितानिरूपकत्वं, नशधातोः ध्वंसोऽर्थः, ण्वुल्प्रत्ययस्य जनकत्वमर्थः, तथाच संयोगप्रतियोगिकनाशजनकत्वे सति गुणत्वं

---

विभागलक्षणे ॥ ननु संयोगनाशजनकत्वे सति गुणत्वस्य विभागलक्षणत्वाङ्गीकारेऽपि ध्वंसं प्रति प्रतियोगिनः कारणत्वेन संयोगनाशजनकत्वस्य गुणत्वस्य च संयोगे सत्वात् अति व्याप्तिरिति वाच्यम्, संयोगनाशनिष्ठजन्यतायां प्रतियोगितासम्बन्धानवच्छिन्नत्वस्य जनकतायां

विभागस्य लक्षणं, आदौ क्रिया, क्रियातो विभागः, विभागात्पूर्वसंयोगनाशः, पूर्वसंयोगनाशादुत्तरसंयोगोत्पत्तिरिति क्रममनुसृत्य संयोगनाशजनकत्वं गुणत्वञ्च विभागेऽस्तीति समन्वयः । गुणत्वमात्रोक्तौ रूपादावतिव्याप्तिः । गुणत्वानुपादाने क्रियाया अपि परम्परया संयोगनाशजनकत्वात् तत्रातिव्याप्तिः, अतः उभयोपादानम् ॥

**मू* परापरव्यवहारासाधारणकारणे परत्वापरत्वे। ते द्विविधे, दिक्कृते कालकृतेचेति। दूरस्थे दिक्कृतं परत्वम्। समीपस्थे दिक्कृतमपरत्वम्। ज्येष्ठे कालकृतं परत्वम्। कनिष्ठे कालकृतमपरत्वम् ॥**

परत्वापरत्वयोर्लक्षणमाह परापरेति ॥ परव्यवहारनिष्ठकार्यतानिरूपितकारणताश्रयत्वं परत्वस्य लक्षणं, परव्यवहारनिष्ठा या कार्यता अयमस्मात्परः इति व्यवहारनिष्ठा कार्यता, तन्निरूपितकारणताश्रयत्वं परत्वे वर्ततइति समन्वयः ॥ अपरव्यवहारनिष्ठकार्यतानिरूपितकारणताश्रयत्वं अपरत्वस्य लक्षणं, अपरव्यवहारनिष्ठा या कार्यता अयमस्मादपरः इति व्यवहारनिष्ठा कार्यता, तन्निरूपितकारणताश्रयत्वमपरत्वे वर्ततइति लक्षणसमन्वयः । अन्यत्सर्वं पूर्ववत् बोध्यम् ॥

---

समवायसम्बन्धावच्छिन्नत्वस्य वा निवेशनीयत्वात्, तन्निवेशे प्रतियोगितासम्बन्धेन जायमानसंयोगनाशं प्रति तादात्म्यसम्बन्धेन संयोगस्य कारणत्वेन अत्र कार्यतायाः प्रतियोगितासम्बन्धावच्छिन्नत्वेन कारणतायाः तादात्म्यसम्बन्धावच्छिन्नत्वेन च प्रकारद्वयेऽपि दोषाभावात् । स्वरूपसम्बन्धेन जायमानसंयोगनाशं प्रति समवायसम्बन्धेन विभागस्य कारणत्वेन उभयत्रापि लक्षणसमन्वयः ॥



**मू* आद्यपतनासमवायिकारणं गुरुत्वम्। पृथिवीजलवृत्ति ॥**

गुरुत्वं लक्षयति आद्येति ॥ आद्यपतननिष्ठकार्यतानिरूपितासमवायिकारणताश्रयत्वं गुरुत्वस्य लक्षणम् । आद्यपतननिष्ठकार्यतानिरूपिता या असमवायिकारणता गुरुत्वनिष्ठाऽसमवायिकारणता, तदाश्रयत्वं गुरुत्वेऽस्तीति समन्वयः । आद्यपदाभावे द्वितीयादिपतनमादाय वेगेऽतिव्याप्तिः । असमवायित्वानुपादाने आद्यपतनसमवायिकारणत्वं तन्निमित्तकारणतां वा आदाय तत्समवायिकारणफलादौ तन्निमित्तकारणवाय्वादौ चातिव्याप्तिः ॥

**मू* आद्यस्यन्दनासमवायिकारणं द्रवत्वम्। पृथिवीजलतेजोवृत्ति। तद्विविधं, सांसिद्धिकं नैमित्तिकंचेति। सांसिद्धिकं जले। नैमित्तिकं पृथिवीतेजसोः। पृथिव्यां घृतादावग्निसंयोगजं द्रवत्वम्। तेजसि सुवर्णादौ ॥**

द्रवत्वं लक्षयति आद्येति ॥ गुरुत्वद्रवत्वलक्षणयोर्बोधस्सुगम इति न लिखितम् । आद्यस्यन्दननिष्ठकार्यतानिरूपितासमवायिकारणताश्रयत्वं द्रवत्वस्य लक्षणम् । आद्यस्यन्दननिष्ठकार्यतानिरूपिता याऽसमवायिकारणता द्रवत्वनिष्ठाऽसमवायिकारणता, तदाश्रयत्वं द्रवत्वेऽस्तीति समन्वयः । आद्यपदाभावे द्वितीयादिस्यन्दनमादाय वेगेऽतिव्याप्तिः । असमवायित्वानुपादाने पूर्ववत् तत्समवायिकारणीभूतजलादावतिव्याप्तिः । अत्र लक्षणद्वये चासमवायिकारणत्वं आद्यपतनादिनिष्ठकार्यतानिरूपितसमवायसम्बन्धावच्छिन्नकारणताश्रयत्वरूपमेव, नतु समवायसम्बन्धा-

वच्छिन्नकार्यताघटितं तत्, अत्र कार्यतायां समवायसम्बन्धावच्छिन्नत्वप्रवेशे प्रयोजनाभावात् इति ॥

मू॰ * चूर्णादिपिण्डीभावहेतुर्गुणः स्नेहः। जलमात्रवृत्तिः ॥

स्नेहं लक्षयति चूर्णादीति। बोधः पूर्ववत्। पिण्डीभावो नाम धारणकर्षणहेतुभूतो विलक्षणसंयोगः। चूर्णादिपिण्डीभावनिष्ठकार्यतानिरूपितकारणताश्रयत्वे सति गुणत्वं स्नेहस्य लक्षणम्। चूर्णादिपिण्डीभावनिष्ठकार्यतानिरूपिता या कारणता स्नेहनिष्ठाकारणता, तदाश्रयत्वं स्नेहे वर्तत इति समन्वयः। विशेष्यमात्रोपादाने रूपादौ विशेषणमात्रोपादाने कालेश्वरादौ चातिव्याप्तिरित्युभयोपादानम्। नचैवमप्यदृष्टेऽतिव्याप्तिर्दुर्वारेति वाच्यम्, असाधारणकारणत्वनिवेशेन तस्याः वारणीयत्वात्। नचैवं असाधारणकारणत्वनिवेशे कालेश्वरादावसाधारणकारणत्वाभावेनैवातिव्याप्तिवारणात् गुणपदस्य वैयर्थ्यमिति वाच्यम्, चूर्णादावतिव्याप्तिवारणायैव तत्सार्थक्यात् ॥ वस्तुतस्तु, स्नेहस्य पिण्डीभावहेतुत्वस्वीकारे प्रमाणाभावेन स्वाश्रयसंयुक्तत्वसंबन्धेनास्य कारणत्वस्य वक्तव्यतया गौरवेण च नास्य पिण्डीभावहेतुत्वमङ्गीकार्यम्। द्रुतजलसंयोगस्य तत्कारणत्वकल्पने प्रत्यक्षप्रमाणसाहाय्येन अस्य समवायसम्बन्धेनैव कारणत्वस्य सुवचतया कारणतावच्छेदकसम्बन्धकृतलाघवेन च द्रुतजलसंयोगस्यैव पिण्डीभावहेतुत्वं वक्तव्यम् ॥ अतश्च एवमेवाभिप्रयन्ति बहवः ॥



मू॰ * श्रोत्रग्राह्यो गुणश्शब्दः। स द्विविधः, ध्वन्यात्मको वर्णात्मकश्चेति। ध्वन्यात्मको भेर्यादौ। वर्णात्मकस्संस्कृतभाषादिरूपः ॥

शब्दं लक्षयति श्रोत्रेति ॥ रसादिलक्षणस्थलवत् बोधप्रकारः ग्राह्यः। श्रोत्रेन्द्रियजन्यप्रत्यक्षविषयत्वे सति गुणत्वं शब्दस्य लक्षणम्, श्रोत्रेन्द्रियजन्यं यत्प्रत्यक्षं अयंभेरीशब्दः अयंमृदङ्गशब्दः इत्याद्याकारकं प्रत्यक्षं, तद्विषयत्वे सति गुणत्वस्य शब्दे सत्वात् समन्वयः। विशेष्यमात्रोपादाने रूपादौ विशेषणमात्रोपादाने शब्दत्वादौ च अतिव्याप्तिः इत्युभयोपादानम्। नच अत्रान्तिमशब्दस्यैव श्रोत्रेन्द्रियग्राह्यत्वेन आद्यशब्दे तल्लक्षणाभावादव्याप्तिरिति वाच्यम्, श्रोत्रेन्द्रियजन्यप्रत्यक्षविषयतावच्छेदकजातिमद्गुणत्वस्य निवेशनीयत्वात्, आद्यस्याप्रत्यक्षत्वेपि तादृशजातिमत्वस्य तत्राप्यक्षतत्वेनाव्याप्त्यभावात्। नचैवं जातिघटितलक्षणे शब्दत्वादावतिव्याप्त्यभावात् गुणत्वस्य वैयर्थ्यमिति वाच्यम्, श्रोत्रेन्द्रियजन्यं यत्प्रत्यक्षं अयंभेरीशब्दः इत्यादिप्रत्यक्षं, तद्विषयतावच्छेदकीभूता या जातिः भेरीत्वजातिः, तादृशजातिमत्वस्य भेर्यादौ सत्वात् अतिव्याप्त्यापत्तेः। नच श्रोत्रेन्द्रियजन्यत्वस्य न प्रत्यक्षविशेषणत्वं, किन्तु श्रोत्रेन्द्रियप्रयोज्यत्वस्य प्रत्यक्षविषयताविशेषणत्वमङ्गीक्रियते, तथाच श्रोत्रेन्द्रियप्रयोज्यप्रत्यक्षविषयतावच्छेदकजातिमत्वं लक्षणमुच्यते, भेर्यादिनिष्ठविषयतायाः श्रोत्रेन्द्रियप्रयोज्यत्वाभावेन न तत्रातिव्याप्तिः, तदा गुणपदस्य स्वरूपकीर्तनमात्रपरत्वमेवाङ्गीक्रियते इति ध्येयम् ॥

**मू॰* सर्वव्यवहारहेतुः ज्ञानं बुद्धिः। सा द्विविधा, स्मृतिरनुभवश्चेति ॥**

बुद्धिं निरूपयति सर्वेति ॥ (अर्थं बुध्वा शब्दरचना, इति न्यायेन अर्थज्ञानस्य शब्दप्रयोगहेतुत्वं निर्विवादम्) सर्वव्यवहारनिष्ठ-कार्यतानिरूपितकारणताश्रयत्वं बुद्धेर्लक्षणं, सर्वव्यवहारनिष्ठा या कार्यता अयंघट इत्यादिशब्दप्रयोगे विद्यमाना कार्यता, तन्निरूपिता या कारणता अयंघट इत्यादिज्ञाने विद्यमाना कारणता, तदाश्रयत्वं ज्ञाने वर्ततइति लक्षणसमन्वयः। अत्र सर्वे ये व्यवहाराः तद्धेतुत्वमिति वा, सर्वमिति यो व्यवहारः तद्धेतुत्वमिति वा विग्रहः ! नाद्यः, कस्यापि ज्ञानस्य सर्वव्यवहार-हेतुत्वाभावात् असम्भवापत्तेः। न द्वितीयः, सर्वत्वप्रकारकव्यवहारहेतुत्वस्य सर्वमिति ज्ञाने सत्वेऽपि घटपटादिज्ञानेषु तस्याभावात् अव्याप्तिः। अतः द्वितीयं पक्षमवलंब्य सर्वत्वप्रकारकज्ञानजनक शब्दप्रयोगनिष्ठकार्यतानिरूपित कारणतावद्वृत्तिजातिमत्वमितिलक्षणं परिष्करणीयम्, अतः सर्वत्वप्रकारक-व्यवहारनिष्ठकार्यतानिरूपितकारणतावत् सर्वं इति ज्ञानं, तद्वृत्तिः या जातिः ज्ञानत्वजातिः, तद्वत्वस्य घटादिविषयकज्ञानेष्वपि सत्वात् अव्याप्त्यभावः, लक्षणसमन्वयश्च। नचैवं सर्वव्यवहारनिष्ठकार्यता-निरूपितकारणतावद्वृत्तिगुणत्वजातिमादाय रूपादावतिव्याप्तिरिति वाच्यम्, जातौ गुणत्वव्याप्यत्वस्य निवेशनीयत्वात्, गुणत्वजातिः न गुणत्वव्याप्येति नातिव्याप्तिः॥ अथवा, सर्वपदस्य स्वरूपकीर्तनपरत्वमेवाङ्गीक्रियते, व्यवहारहेतुत्वमात्रमेव ज्ञानस्य लक्षणमुच्यते। शब्दप्रयोगं प्रति ज्ञानस्यैव साक्षाद्धेतुत्वेन घटादीनाञ्च ज्ञानद्वारैव कारणत्वेन



साक्षाद्व्यवहारहेतुत्वकथनेनैव घटादावतिव्याप्तेर्वारणात्। अतो न विग्रहविकल्पप्रयुक्तासम्भवाव्याप्ती, व्यवहारं प्रति साक्षाद्धेतुत्वस्य ज्ञाने सर्वत्रापि सम्भवात्। नचैवं कालेश्वरादावतिव्याप्तिः, गुणत्वस्यापि निवेशनीयत्वात्। नच तथाप्यदृष्टेऽतिव्याप्तिर्दुर्वारेति वाच्यम्, व्यव-हारासाधारणकारणत्वस्यापि निवेशनीयत्वात्। नचैवं गुणपदं व्यर्थम्, इष्टापत्तेः। अत एव गुणपदं विहाय सर्वव्यवहारहेतुः ज्ञानं बुद्धिरित्येव मूले ग्रन्थकृताऽभिहितमिति बोध्यम्॥ ज्ञानं विभजते स द्विविध इति। स्मृतित्वानुभवत्वरूपविभाजकधर्मद्वयान्यतरवदभिन्ना बुद्धिरिति बोधः॥

**मू॰* संस्कारमात्रजन्यं ज्ञानं स्मृतिः॥**

स्मृतिं लक्षयति संस्कारेति॥ मात्रपदस्य इतरयोगो व्यवच्छेदश्च अर्थः, अत्र इतरयोगः इतरजन्यत्वरूपः, अस्य च व्यवच्छेदेऽन्वयः। तथाच संस्कारेतराजन्यत्वे सति संस्कारजन्यत्वे सति ज्ञानत्वं स्मृते र्लक्षणमिति फलितम्। संस्कारेतरचक्षुराद्यजन्यत्वे सति संस्कारजन्यत्वे सति ज्ञानत्वस्य स्मृतौ सत्वात् समन्वयः। (प्रथममनुभवः, ततः भावनाख्यसंस्कारः, ततः उद्बोधकसामग्रीसहितात् संस्कारात् स्मृतिः, इति स्मृतेरुत्पत्तिक्रमः) ज्ञानत्वमात्रोक्तावनुभवेऽतिव्याप्तिः। संस्कार-जन्यत्वमात्रोक्तौ ध्वंसं प्रति प्रतियोगिनः कारणत्वेन संस्कारमात्रजन्य-त्वस्य संस्कारध्वंसे सत्वात् तत्राऽतिव्याप्तिः। अतो ज्ञानत्वदळं, तन्निवेशे ध्वंसे ज्ञानत्वस्याभावात् नातिव्याप्तिः। संस्कारेतराजन्यत्वे सति ज्ञानत्वमात्रोक्तौ ईश्वरीयज्ञानस्य नित्यत्वेन (केनाप्यजन्यत्वात्)

संस्कारेतराजन्यत्वं ज्ञानत्वञ्च तत्रास्तीत्यतिव्याप्तिः, अतः संस्कारजन्यत्वनिवेशः। नच ईश्वरीयज्ञानस्य जन्यत्वविशेषणेनैव वारणात् संस्कारपदं व्यर्थमिति वाच्यम्, योगिज्ञानस्य योगजन्यत्वेन तत्र जन्यत्व ज्ञानत्वयोः सत्वात् अतिव्याप्तेः संस्कारजन्यत्वनिवेशे तु योगिज्ञानस्य योगजन्यत्वेन संस्कारजन्यत्वाभावात् नातिव्याप्तिः। नच योगिज्ञानस्य योगजन्यत्वेन संस्कारेतराजन्यत्वविशेषणेनैव दोषवारणात् संस्कारपदस्य वैयर्थ्यं दुर्वारमेवेति वाच्यम्, स्मृतेरपि संस्कारेतरमनोजन्यत्वेन तदजन्यत्वाभावेन असंभववारणाय संस्कारेतरपदस्य बहिरिन्द्रियपरत्वेन व्याख्येयतया योगिज्ञाने बहिरिन्द्रियाजन्यत्वजन्यत्वज्ञानत्वानां सत्वादतिव्याप्तिवारणाय संस्कारपदस्य सार्थक्यात्। संस्कारजन्यत्वे सति ज्ञानत्वमात्रोक्तै सोऽयं देवदत्तः इति प्रत्यभिज्ञायाः इदंत्वांशे चक्षुरादिजन्यत्वेपि तत्तांशे संस्कारजन्यत्वेन संस्कारजन्यत्वज्ञानत्वयोः तत्र सत्वात् अतिव्याप्तिवारणाय मात्रपदं, तन्निवेशे तस्याः इदंत्वांशे बहिरिन्द्रियजन्यत्वेन तदजन्यत्वस्य तत्राभावात् नातिव्याप्तिः॥

**मू* तद्भिन्नं ज्ञानं अनुभवः, स द्विविधः, यथार्थोऽयथार्थश्चेति॥**

अनुभवं लक्षयति तद्भिन्नमिति॥ स्मृतिभिन्नत्वे सति ज्ञानत्वमनुभवस्य लक्षणम्। ज्ञानत्वमात्रोक्तौ स्मृतावतिव्याप्तिः। स्मृतिभिन्नत्वमात्रोक्तौ घटादावतिव्याप्तिः। अतो दळद्वयोपादानम्। प्रत्यभिज्ञायाः संस्कारमात्रजन्यत्वाभावेन न स्मृतावन्तर्भावः, किन्तु अनुभव एवेति बोध्यम्॥



**मू* तद्वति तत्प्रकारकानुभवो यथार्थः, सैव प्रमेत्युच्यते। यथा, रजते इदं रजतमिति॥**

यथार्थानुभवं लक्षयति तद्वतीति॥ तद्वतीत्यत्र सप्तम्यर्थो विशेष्यतानिरूपकत्वम्। तद्वतः आधेयत्वसम्बन्धेन विशेष्यतायामन्वयः। तथाच तद्वन्निष्ठविशेष्यतानिरूपकत्वे सति तन्निष्ठप्रकारतानिरूपकत्वे सति अनुभवत्वं यथार्थानुभवस्य लक्षणम्। तत्पदेन प्रकारीभूतधर्मो ग्राह्यः। रजते इदंरजतं इति ज्ञाने लक्षणसमन्वयः, तथाहि, तत् रजतत्वं, तद्वत् रजतं, तन्निष्ठविशेष्यतानिरूपकत्वे सति तत्पदग्राह्यरजतत्वनिष्ठप्रकारतानिरूपकत्वे सति अनुभवत्वस्य पूर्वोक्तज्ञाने सत्वात्। अनुभवत्वमात्रोक्तौ अयथार्थानुभवेऽतिव्याप्तिः। अनुभवत्वानुपादाने इदंरजतं इति यथार्थानुभवजन्यस्मृतिसंस्कारयोः अतिव्याप्तिः, तत्रापि तद्वद्विशेष्यकत्वतत्प्रकारकत्वयोः सत्वात्, अतोऽनुभवत्वनिवेशः। तद्वद्विशेष्यकत्वे सति अनुभवत्वमात्रोक्तौ शुक्तौ इदंरजतं इति अयथार्थानुभवेऽतिव्याप्तिः, तथाहि, तत्प्रकारकत्वदळाभावे तत्पदेन प्रकार एव ग्राह्य इति नियमालाभेन अत्र तच्छब्देन शुक्तित्वं गृह्यते तत्र तद्वच्छुक्तिविशेष्यकत्वज्ञानत्वयोः सत्वात् अतिव्याप्तिः, अतः तत्प्रकारकत्वदलम्, तन्निवेशे (एकत्रोच्चरितयोः तच्छब्दयोः एकार्थबोधकत्वम्, इति नियमेन) प्रथमगृहीततत्पदार्थस्यैव द्वितीयतत्पदेनापि ग्राह्यतया प्रथमतत्पदगृहीतशुक्तित्वप्रकारकत्वस्य निरुक्तानुभवेऽभावात् नातिव्याप्तिः। तत्प्रकारकत्वे सति अनुभवत्वमात्रोक्तौ शुक्तौ इदंरजतं इति भ्रमे तत्पदग्राह्यरजतत्वप्रकारकत्वे सति अनुभवत्वस्य सत्वात् तत्रातिव्याप्तिः, अतः तद्वद्विशेष्यकत्वं

निवेशनीयम्, तन्निवेशे तु तत्पदगृहीतरजतत्ववद्रजतविशेष्यकत्वस्य तत्राभावात् नातिव्याप्तिः। नचैवमपि पर्वतो घटत्ववान् ह्रदो वह्निमान् इति समूहालम्बनभ्रमे वह्निमत्पर्वतविशेष्यकत्ववह्निप्रकारकत्वयोः सत्वात् अतिव्याप्तिरिति वाच्यम्, तद्वन्निष्ठविशेष्यतानिरूपिता या तन्निष्ठा प्रकारता तच्छाल्यनुभवत्वस्य लक्षणत्वाङ्गीकारात्, तदङ्गीकारे अत्र वह्नेः ह्रदांशे प्रकारत्वेन वह्निमति पर्वतांशे अप्रकारत्वेन वह्निनिष्ठप्रकारतायाः वह्निमत्पर्वतनिष्ठविशेष्यतानिरूपितत्वाभावेन तादृशप्रकारतानिरूपकत्वस्य तत्राभावात् नातिव्याप्तिः। नचैवमपि पर्वतोवह्निमान् ह्रदोवह्निमान् इतिसमूहालम्बनभ्रमे वह्निमत्पर्वतनिष्ठविशेष्यतानिरूपितवह्निनिष्ठप्रकारतानिरूपकत्वस्य सत्वात् अतिव्याप्तिरिति वाच्यम्, भ्रमभिन्नत्वेनापि अनुभवस्य विशेषणीयत्वात्, तज्ज्ञानस्य ह्रदांशे वह्न्यवगाहित्वेन भ्रमरूपतया भ्रमभिन्नत्वस्य तत्राभावात् नातिव्याप्तिः। नच निर्विकल्पकप्रत्यक्षे प्रकारताविशेष्यतयोः अभावेन तद्वद्विशेष्यकत्वतत्प्रकारकत्वयोरभावात् अव्याप्तिरिति वाच्यम्, तद्वद्विशेष्यकं तत्प्रकारकं यत् ज्ञानं तद्वृत्तिः अनुभवत्वव्याप्या या जातिः तद्वत्त्वस्य विवक्षणीयत्वात्, निर्विकल्पकप्रत्यक्षे विशेष्यप्रकारत्वयोरसत्वेपि तद्वद्विशेष्यक तत्प्रकारकज्ञानवृत्त्यनुभवत्वव्याप्ययथार्थानुभवत्वजातेः सत्वात् नाव्याप्तिः। अथवा, (न प्रमा नापि भ्रमस्स्यान्निर्विकल्पकं, इत्यनेन) निर्विकल्पकज्ञाने प्रमात्वभ्रमत्वयोः सिद्धान्ते निराकरणात् अलक्ष्ये तस्मिन् लक्षणासमन्वयेपि न क्षतिः॥



**मू* तदभाववति तत्प्रकारकानुभवोऽयथार्थः, स एव भ्रम इत्युच्यते, यथा, शुक्तौ इदं रजतं इति॥**

अयथार्थानुभवं लक्षयति तदभाववतीति॥ अत्रापि सप्तम्यर्थादिकं पूर्ववत् ग्राह्यम्। तदभाववन्निष्ठविशेष्यतानिरूपकत्वे सति तन्निष्ठप्रकारतानिरूपकत्वे सति अनुभवत्वं अयथार्थानुभवस्य लक्षणम्। शुक्तौ इदं रजतं इति ज्ञाने लक्षणसमन्वयः, तथाहि, तत्पदेन प्रकारीभूतरजतत्वं ग्राह्यं, तदभावः रजतत्वाभावः, तद्वती शुक्तिः तन्निष्ठविशेष्यतानिरूपकत्वे सति रजतत्वनिष्ठप्रकारतानिरूपकत्वे सति अनुभवत्वस्य तत्र ज्ञाने सत्वात्। अनुभवत्वमात्रोक्तौ यथार्थानुभवेऽतिव्याप्तिः। अनुभवत्वानुपादाने अयथार्थस्मृतौ अतिव्याप्तिः। तदभाववद्विशेष्यकत्वे सति अनुभवत्वमात्रोक्तौ रजते इदंरजतं इति यथार्थानुभवेऽतिव्याप्तिः, तत्पदेन शुक्तित्वस्य ग्रहणे तदभाववत् (शुक्तित्वाभाववत्) रजतं, तद्विशेष्यकत्वे सति अनुभवत्वस्य तत्र ज्ञाने सत्वात्, तत्प्रकारकत्वस्य निवेशे तु शुक्तित्वप्रकारकत्वस्य पूर्वोक्तज्ञानेऽभावात् नातिव्याप्तिः। तत्प्रकारकत्वे सति अनुभवत्वमात्रोक्तौ रजते इदंरजतं इति प्रमायामतिव्याप्तिः, तत्र तत्पदग्राह्यरजतत्वप्रकारकत्वानुभवत्वयोः सत्वात्, तदभाववद्विशेष्यकत्वनिवेशे तु रजतत्वाभाववद्विशेष्यकत्वस्य तत्राभावान्नातिव्याप्तिः॥

**मू* यथार्थानुभवः चतुर्विधः, प्रत्यक्षानुमित्युपमितिशाब्दभेदात्। तत्करणमपि चतुर्विधम्, प्रत्यक्षानुमानोपमानशब्दभेदात्। असाधारणकारणं करणम्॥**

यथार्थानुभवं विभजते यथार्थानुभव इति ॥ प्रमाकरणं विभजते प्रत्यक्षेति। करणलक्षणमाह असाधारणेति। तत्र व्यापारजनकमिति पूरणीयम्, तथाच व्यापारजनकत्वे सति (असाधारणकारणत्वं) कार्यत्वातिरिक्तधर्मावच्छिन्न कार्यतानिरूपितकारणताश्रयत्वं करणस्य लक्षणमिति फलितम्। घटं प्रति करणीभूतदण्डे लक्षणसमन्वयः, तथाहि, कार्यत्वातिरिक्तो यो धर्मः घटत्वरूपो धर्मः तद्धर्मावच्छिन्ना या कार्यता घटे विद्यमाना कार्यता, तन्निरूपिता या कारणता दण्डे विद्यमाना कारणता, तदाश्रयत्वं भ्रमणरूपव्यापारजनकत्वञ्च दण्डे वर्तते इति लक्ष्ये लक्षणसमन्वयः। (तज्जन्यत्वे सति तज्जन्यजनको व्यापारः, तत्पदं करणत्वेनाभिमतपरम्) व्यापारजनकत्वमात्रोक्तौ ईश्वरादृष्टादेः कार्यमात्रं प्रति कारणत्वेन व्यापारजनकत्वस्यापि सत्वात् तत्रातिव्याप्तिः, असाधारणकारणत्वनिवेशे तु ईश्वरादृष्टादेः कार्यमात्रं प्रति साधारणकारणत्वेन असाधारणकारणत्वस्य तत्राभावात् नातिव्याप्तिः। असाधारणकारणत्वमात्रोक्तौ घटं प्रति भ्रमणरूपव्यापारस्यासाधारणकारणत्वेन व्यापारएवातिव्याप्तिः, व्यापारजनकत्वनिवेशे तु व्यापारे व्यापारजनकत्वाभावात् नातिव्याप्तिः ॥

**मू॰* कार्यनियतपूर्ववृत्ति कारणम्। यथा, घटादिकं प्रति दण्डादिः ॥**

कारणं लक्षयति कार्येति ॥ कार्यनियतत्वे सति कार्यपूर्ववृत्तित्वं कारणस्य लक्षणम्। कार्यनियतत्वञ्च कार्यव्यापकत्वं, तच्च कार्याधिकरणवृत्त्यत्यन्ताभावाप्रतियोगित्वं, तथाच घटकारणीभूतदण्डे लक्षणसमन्वयः, तथाहि कार्यं घटः, तदधिकरणं कपालः, तद्वृत्तिः योऽत्यन्ताभावः स्वजन्यभ्रमिजन्यभ्रमिवत्वसम्बन्धेन दण्डो नास्तीत्याकारकाभावो नायाति, कुतः, स्वं दण्डः, स्वजन्या या भ्रमिः चक्रभ्रमिः, तज्जन्या या भ्रमिः कपालभ्रमिः, तद्वान् कपालः, तद्वत्तासम्बन्धेन कपाले दण्डस्य विद्यमानत्वात् किन्तु उदासीनः पटाद्यभावः तत्र सम्भवति, तत्प्रतियोगित्वं पटादौ, अप्रतियोगित्वं कार्यरूपघटाव्यवहित प्राक्क्षणवृत्तित्वञ्च दण्डे वर्तते इति लक्षणसमन्वयः। कार्यपूर्ववृत्तित्वमात्रोक्तौ रासभादेरपि कार्यपूर्ववृत्तित्वात् तत्रातिव्याप्तिः, कार्यव्यापकत्वस्य निवेशे तु कार्याधिकरणकपाले निरुक्तसम्बन्धेन रासभोनास्तीत्यभावस्य सत्वेन तत्प्रतियोगित्वेन रासभस्य तदप्रतियोगित्वाभावात् नातिव्याप्तिः। कार्यव्यापकत्वमात्रोक्तौ कार्याधिकरणकपाले समवायसम्बन्धेन कार्यभूतघटस्य सत्वेन न तत्र घटाभावः सम्भवति, किन्तु पटाद्यभावस्यैव तत्र सत्वेन तदप्रतियोगित्वस्य कार्यएव सत्वेन तत्रातिव्याप्तिः, तद्वारणाय कार्यपूर्ववृत्तित्वदलं, तन्निवेशे स्वपूर्ववृत्तित्वस्य कार्येऽसम्भवात् न तत्रातिप्रसङ्गः। नचैवं दण्डरूपादावतिव्याप्तिः, तत्र स्वाश्रयजन्यभ्रमिजन्यभ्रमिवत्वसम्बन्धेन कार्यव्यापकत्वस्य कार्यपूर्ववृत्तित्वस्य च सत्वात् इति वाच्यम्, अनन्यथासिद्धत्वस्यापि विशेषणीयत्वात्, अनन्यथासिद्धत्वञ्च अन्यथासिद्धभिन्नत्वं, अन्यथासिद्धत्वञ्च क्लृप्तकारणबहिर्भूतत्वं, दण्डरूपादीनां घटकारणतया क्लृप्तेषु दण्डचक्रसलिलकुलालादिषु अनन्तर्भूतत्वेन अन्यथासिद्धत्वात् तद्भिन्नत्वस्य तत्राभावात् नातिव्याप्तिः ॥

**मू॰ कार्यं प्रागभावप्रतियोगि ॥**

कार्यं लक्षयति प्रागभावेति ॥ कार्योत्पत्तेः पूर्वं वर्तमानः भविष्यतीतिप्रतीतिविषयः प्रागभावः, तत्प्रतियोगित्वं कार्ये घटादौ वर्तते इति लक्षणसमन्वयः । (तच्च उत्पत्तिमत्त्वे पर्यवसन्नम्) अभावप्रतियोगित्वमात्रोक्तौ गगनाभावप्रतियोगित्वमादाय गगनेऽतिव्याप्तिः, अतः प्रागभावेति, गगनस्य प्रागभावप्रतियोगित्वाभावात् नातिव्याप्तिः ॥

**मू॰ कारणं त्रिविधम्, समवाय्यसमवायिनिमित्तभेदात्। यत्समवेतं कार्यमुत्पद्यते तत् समवायिकारणं, यथा, तन्तवः पटस्य, पटश्च स्वगतरूपादेः ॥**

कारणं विभजते कारणमिति ॥ यत्समवेतं येषु तन्त्वादिषु समवेतं सत् समवायसम्बन्धेन वर्तमानं सत् कार्यं पटादिरूपं कार्यं उत्पद्यते तं पटादिकं प्रति तत् तन्त्वादिकं समवायिकारणं भवतीत्यर्थः ॥ सर्वत्र कार्यकारणयोः सामानाधिकरण्यस्यावश्यकतया सामानाधिकरण्यनिरूपके एकस्मिन्नधिकरणे कार्यकारणे येन येन सम्बन्धेन वर्तेते तयोः संबन्धयोः क्रमेण कार्यकारणतावच्छेदकसम्बन्धरूपतया अत्र घटरूपकार्यस्य समवायसम्बन्धेन कपालरूपकारणस्य तादात्म्यसम्बन्धेन च कपालरूपैकाधिकरणे वर्तमानतया समवायसम्बन्धावच्छिन्नकार्यतानिरूपित तादात्म्यसम्बन्धावच्छिन्नकारणताश्रयत्वं समवायिकारणस्य निष्कृष्टं लक्षणं वक्तव्यं भवति, समवायसम्बन्धावच्छिन्नपटत्वघटत्वाद्यवच्छिन्न कार्यतानिरूपिततादात्म्यसंबन्धावच्छिन्न तन्तुत्वकपालत्वाद्यवच्छिन्नकारणताश्रयत्वस्य पटघटादिसमवायिकारणीभूततन्तुकपालादिषु विद्यमानत्वात् लक्ष्ये लक्षणसमन्वयः । कार्यतायां समवायसंबन्धावच्छिन्नत्वानिवेशे घटप्रत्यक्षनिमित्तकारणीभूतघटेऽतिव्याप्तिः, विषयतासंबन्धेन जायमानघटप्रत्यक्षं प्रति तादात्म्यसंबन्धेन घटस्य कारणत्वेन विषयतासंबन्धावच्छिन्नघटप्रत्यक्षत्वावच्छिन्नकार्यतानिरूपित तादात्म्यसंबन्धावच्छिन्नकारणतायाः घटादौ सत्वात् । कारणतायां तादात्म्यसंबन्धावच्छिन्नत्वानिवेशे पटाद्यसमवायिकारणीभूततन्तुसंयोगादौ समवायसंबन्धावच्छिन्नपटत्वाद्यवच्छिन्न कार्यतानिरूपितसमवायसंबन्धावच्छिन्नकारणताश्रयत्वमादाय अतिव्याप्तिः ॥ अवयविद्रव्यं प्रत्येवावयवद्रव्यं न समवायिकारणं, किन्तु द्रव्यस्य भावकार्यरूपद्रव्यगुणकर्मसमवायिकारणत्वमपि संभवतीति ज्ञापयितुं पटश्च स्वगतरूपादेरिति अभिधत्ते मूलकारः ॥



**मू॰ कार्येण कारणेन वा सहैकस्मिन्नर्थे समवेतं सत् कारणं असमवायिकारणम्, यथा, तन्तुसंयोगः पटस्य, तन्तुरूपं पटगतरूपस्य च ॥**

असमवायिकारणद्वयमुदाहरति कार्येणेति ॥ कार्येण सहैकस्मिन्नर्थे संमवेतं सत् कारणमसमवायिकारणमित्येकम् । कारणेन सहैकस्मिन्नर्थे समवेतं सत्कारणमसमवायिकारणमित्यपरम् । पटादिकं प्रति तन्त्वादिसंयोगः प्रथमासमवायिकारणम् । पटादिरूपं प्रति तन्त्वादिरूपं द्वितीयासमवायिकारणम् । कार्येणपटेन सह एकस्मिन्नर्थे तन्तुरूपार्थे समवेतं सत् समवायसंबन्धेन वर्तमानं सत् कारणं तन्तुसंयोगो भवति तं पटं प्रति तत् तन्तुसंयोगः असमवायिकारणम् इति योजना । कार्यकारणयोः

पटतन्तुसंयोगयोः तन्तुरूपैकाधिकरणान्तर्भावेण समवायघटित सामानाधिकरण्यस्य लभ्यत्वेन समवायसंबन्धावच्छिन्नकार्यतानिरूपितसमवायसंबन्धावच्छिन्नकारणताश्रयत्वं प्रथमासमवायिकारणस्य लक्षणं फलितं भवति। समवायसंबन्धावच्छिन्नपटत्वाद्यवच्छिन्नकार्यतानिरूपितसमवायसंबन्धावच्छिन्नतन्तुसंयोगत्वाद्यवच्छिन्नकारणताश्रयत्वस्य तन्तुसंयोगादौ सत्वात् समन्वयः। कार्यतायां समवायसंबन्धावच्छिन्नत्वानिवेशे घटप्रत्यक्षनिमित्तकारणीभूतघटरूपे विषयतासंबन्धावच्छिन्न घटप्रत्यक्षत्वावच्छिन्नकार्यतानिरूपितसमवायसंबन्धावच्छिन्नकारणतामादाय अतिव्याप्तिः। कारणतायां समवायसंबन्धावच्छिन्नत्वानिवेशे तादात्म्यसंबन्धावच्छिन्नकारणतामादाय समवायिकारणेऽतिव्याप्तिः। अतः उभयत्र तत्तत्संबन्धावच्छिन्नत्वनिवेशः॥ द्वितीयासमवायिकारणस्थले, कारणेनेत्यस्य स्वकार्यसमवायिकारणेनेत्यर्थः। स्वं तन्तुरूपं, स्वकार्यं पटगतरूपं, तत्समवायिकारणं पटः, तेन सह एकस्मिन्नर्थे तन्तुरूपार्थे समवेतं कारणं तन्तुरूपं भवतीत्यर्थलाभेन तन्त्वन्तर्भावेण अनयोः सामानाधिकरण्यलाभे स्वाश्रयसमवायित्वसंबन्धावच्छिन्नकार्यतानिरूपितसमवायसंबन्धावच्छिन्नकारणताश्रयत्वमिति लक्षणं मूलतोलभ्यते, एवञ्च पटीयचित्ररूपं प्रति असमवायिकारणेषु नानातन्तुरूपेषु कार्यतावच्छेदकसंबन्धेन कार्याधिकरणवृत्त्यत्यन्ताभावीयकारणतावच्छेदकसंबन्धावच्छिन्नप्रतियोगिताशून्यत्वरूपकार्यव्यापकत्वं न संभवति, तथाहि, अत्र कार्यतावच्छेदकसंबन्धः स्वाश्रयसमवायित्वसंबन्धः, तेन संबन्धेन कार्याधिकरणे नीलपीतादितन्तुषु कारणतावच्छेदकसमवायसंबन्धेन



तत्तद्रूपाभावानां चालिनीन्यायेन सत्वेन तदप्रतियोगित्वस्य तन्त्वादिगतनीलपीतादिरूपेष्वभावात् तत्र कारणत्वाभावप्रसङ्गवारणाय समवायसंबन्धावच्छिन्नकार्यतानिरूपितस्वाश्रयसमवेतत्वसंबन्धावच्छिन्नकारणताश्रयत्वमिति लक्षणं वक्तव्यम्, अतः कार्यतावच्छेदकसमवायसंबन्धेन कार्याधिकरणे पटादौ स्वाश्रयसमवेतत्वसंबन्धेन नानारूपाणां सत्वेन न निरुक्तातिप्रसङ्गः, तथाच, समवायसंबन्धावच्छिन्नकार्यतानिरूपितस्वसमवायिसमवेतत्वसंबन्धावच्छिन्नकारणताश्रयत्वमिति द्वितीयासमवायिकारणस्य निष्कृष्टं लक्षणं भवति, समवायसंबन्धावच्छिन्न पटरूपत्वाद्यवच्छिन्न कार्यतानिरूपित स्वसमवायिसमवेतत्वसंबन्धावच्छिन्नतन्तुरूपत्वाद्यवच्छिन्नकारणताश्रयत्वं तन्तुरूपादिषु संभवतीति लक्षणसमन्वयः। (स्वं तन्त्वादिरूपं, स्वसमवायि तन्त्वादिकं, तत्समवेतः पटः, तत्समवेतत्वं पटेवर्तते, अतः अत्र कार्यकारणयोः पटतन्तुरूपयोः पटान्तर्भावेण सामानाधिकरण्यमिति ज्ञेयम्) अत्र कार्यतायां समवायसंबन्धावच्छिन्नत्वानिवेशे घटरूपप्रत्यक्षनिमित्तकारणमहत्वे विषयतासंबन्धावच्छिन्नकार्यतानिरूपितस्वसमवायिसमवेतत्वसंबन्धावच्छिन्नकारणतामादाय अतिप्रसङ्गः। कारणतायां स्वाश्रयसमवेतत्वसंबन्धावच्छिन्नत्वानिवेशे समवाय्यसमवायिकारणयोः अतिव्याप्तिः॥

**मू* तदुभयभिन्नं कारणं निमित्तकारणं। यथा; तुरीवेमादिकं पटस्य। तदेतत्त्रिविधकारणमध्ये यदसाधारणकारणं तदेव करणम्॥**

निमित्तकारणं लक्षयति तदुभयेति॥ समवायिकारणभिन्नत्वे

सति असमवायिकारणभिन्नत्वे सति कारणत्वं निमित्तकारणस्य लक्षणम् । पटं प्रति निमित्तकारणतुरीवेमादिषु पटसमवाय्यसमवायिकारणतन्तुतत्संयोगादिभिन्नत्वस्य कारणत्वस्य च सत्वात् समन्वयः । कारणत्वमात्रोक्तौ समवाय्यसमवायिकारणयोः, कारणत्वानुपादाने पारिमाण्डल्यादौ (परमाणुपरिमाणगगनपरिमाणादिषु) समवाय्यसमवायिकारणयोश्च अतिव्याप्तिवारणाय दळद्वयोपादानम् । नचैवमपि घटनिमित्तकारणदण्डस्य स्वीयरूपादिकं प्रति समवायिकारणत्वेन तत्र समवायिकारणभिन्नत्वाभावात् अव्याप्तिरिति वाच्यम्, प्रकृतकार्यसमवाय्यसमवायिकारणभिन्नत्वनिवेशे दोषाभावात् । अथवा, समवायिकारणताभिन्ना, असमवायिकारणताभिन्ना या कारणता तदाश्रयत्वस्य लक्षणत्वाङ्गीकारे नोक्ताव्याप्तिः ॥ करणलक्षणमुपसंहरति तदेतदिति ॥ यदसाधारणकारणमित्यत्र व्यापारवत्वे सतीति पूरणीयम्, अन्यथा, कपालतन्तुसंयोगादिरूपव्यापारेऽतिव्याप्तिः । तथाच व्यापारजनकत्वतदजनकत्वाभ्यां करणकारणयोः भेदोऽवगन्तव्यः, असाधारणकारणत्वन्तु उभयत्र समानमेव ॥

**मू॰ तत्र प्रत्यक्षज्ञानकरणं प्रत्यक्षम् ॥**

षड्विधेन्द्रियरूपप्रत्यक्षप्रमाणं लक्षयति प्रत्यक्षज्ञानेति ॥ प्रत्यक्षव्यापारजनकत्वे सति प्रत्यक्षज्ञानत्वावच्छिन्नकार्यतानिरूपितकारणताश्रयत्वं प्रत्यक्षप्रमाणस्य लक्षणम् । प्रत्यक्षज्ञानत्वावच्छिन्ना या कार्यता अयंघटः अयंपटः इत्यादिप्रत्यक्षज्ञानेषु विद्यमाना कार्यता, तन्निरूपिता या कारणता चक्षुरादिप्रत्यक्षप्रमाणनिष्ठा कारणता, तदाश्रयत्वं चक्षुर्घटसंयोगादिव्यापारजनकत्वञ्च (चक्षुर्मनस्संयोगादिव्यापारजनकत्वम्) चक्षुरादिप्रमाणे वर्तते इति लक्षणसमन्वयः । व्यापारजनकत्वमात्रोक्तौ कालेश्वरादृष्टादौ, असाधारणकारणत्वमात्रोक्तौ व्यापारे च अतिव्याप्तिरिति उभयोपादानम् । नचैवं विषयेन्द्रियसंयोगात्मकव्यापारस्य रसादिप्रत्यक्षजनकस्य अप्रसिद्धत्वेन संयुक्तसमवायादीनां जन्यत्वघटितव्यापारत्वासंभवेन च व्यापारजनकत्वाभावात् रसनेन्द्रियादौ अव्याप्तिरिति वाच्यम्, विषयेन्द्रियसंयोगस्य सर्वत्र व्यापारत्वासम्भवेपि इन्द्रियमनस्संयोगरूपस्य व्यापारस्य सर्वत्रापि सम्भवेन न कुत्राप्यव्याप्तिप्रसक्तिः । नचैवं मनस्यव्याप्तिरिति वाच्यम्, आत्ममनस्संयोगरूपव्यापारमादाय तत्रापि लक्षणसमन्वयसंभवात् ॥

**मू॰ इन्द्रियार्थसन्निकर्षजन्यं ज्ञानं प्रत्यक्षम् ॥**

प्रत्यक्षज्ञानलक्षणमाह इन्द्रियार्थेति ॥ इन्द्रियार्थसन्निकर्षजन्यत्वे सति ज्ञानत्वं प्रत्यक्षज्ञानस्य लक्षणम् । ज्ञानत्वमात्रोक्तौ अनुमित्यादावतिव्याप्तिः । ज्ञानत्वानुपादाने ध्वंसं प्रति प्रतियोगिनः कारणत्वेन इन्द्रियार्थसन्निकर्षध्वंसेपि इन्द्रियार्थसन्निकर्ष जन्यत्वस्य सत्वात् तत्रातिव्याप्तिः, अतः विशेष्यविशेषणयोरुभयोः उपादानम् । नचैवमपि इन्द्रियं मनः, अर्थः आत्मा, तत्सन्निकर्षः आत्ममनस्संयोगः तज्जन्यत्वज्ञानत्वयोः अनुमित्यादौ सत्वात् अतिव्याप्तिः, आत्ममनस्संयोगस्य ज्ञानमात्रं प्रति कारणत्वात् इति वाच्यम्, अर्थपदेन प्रकृतज्ञानविषयस्य विवक्षणात् आत्मनः घटादिज्ञानविषयत्वाभावेन अतिप्रसङ्गाभावात् । नचैवमपि जीवः ईश्वरभिन्नः

सुखादिमत्वात् इत्यात्मविषयकानुमितौ अतिव्याप्तिः दुर्वारा, आत्मनः प्रकृतज्ञानविषयत्वस्यापि सम्भवात् इति वाच्यम्, इन्द्रियार्थसन्निकर्षनिष्ठ-जनकतानिरूपितजन्यतावच्छेदकीभूतज्ञानत्वभिन्नजातिमत्वस्य लक्षणत्वात्। ज्ञानमात्रं प्रति आत्ममनस्संयोगस्य कारणत्वेन इन्द्रियार्थसन्निकर्षपदेन आत्ममनस्संयोगस्य ग्रहणेऽपि तज्जन्यतावच्छेदकीभूता ज्ञानत्वजातिस्तु न ज्ञानत्वभिन्ना अतो न तत्रातिव्याप्तिः। प्रकृते प्रत्यक्षत्वादिजातिमादाय लक्षणसमन्वयश्च ॥ अतएव ईश्वरप्रत्यक्षस्य नित्यत्वेन इन्द्रियार्थसन्निकर्ष-जन्यत्वाभावेन प्रत्यक्षज्ञानसामान्यलक्षणस्य तत्राव्याप्तिरिति शङ्का निरस्ता ॥ एतेन यथाश्रुतलक्षणे, ज्ञायमानलिङ्गस्य अनुमितिकरणता-वादिमते इन्द्रियार्थसन्निकर्षहेतुकानुमितौ अतिव्याप्तिशङ्का निरस्ता।

**मू* तद्द्विविधम्, निर्विकल्पकं सविकल्पकञ्चेति। तत्र निष्प्रकारकं ज्ञानं निर्विकल्पकम्। (किञ्चिदिदं इति वस्तुमात्रावगाहिज्ञानम्) सप्रकारकं ज्ञानं सविकल्पकम्। यथा, डित्थोऽयं, ब्राह्मणोऽयं, श्यामोऽयं, पाचकोऽयं इति ॥**

तद्विभजते तद्द्विविधमिति ॥ प्रकारत्वानिरूपकत्वे सति ज्ञानत्वं निर्विकल्पकप्रत्यक्षस्य लक्षणम्, ज्ञानत्वमात्रोक्तौ सविकल्पके, प्रकारत्वा-निरूपकत्वमात्रोक्तौ घटादौ च अतिव्याप्तिरिति दळद्वयोपादानम्। (प्रथमं विषयेन्द्रियसन्निकर्षः, तदनु निर्विकल्पकं, तदनु सविकल्पकं इति क्रमः) निर्विकल्पकज्ञानानङ्गीकारे विशिष्टबुद्धिं प्रति विशेषणज्ञानस्य कारणत्वेन जनिष्यमाणसविकल्पकप्रत्यक्षानुपपत्तिः। अस्य निर्विकल्पकस्य विशिष्ट-



बुद्धित्वाभावेनैव नास्य ज्ञानान्तरापेक्षा इति नानवस्था। सन्निकर्षजन्य-त्वेन अस्य प्रत्यक्षज्ञानरूपत्वमपि उपपद्यते ॥

सविकल्पकं लक्षयति सप्रकारकमिति ॥ प्रकारतानिरूपकत्वे सति ज्ञानत्वं सविकल्पकप्रत्यक्षस्य लक्षणम्। ज्ञानत्वमात्रोक्तौ निर्विकल्पके, प्रकारतानिरूपकत्वमात्रोक्तौ इच्छाकृतिसंस्कारद्वेषेषु च अतिव्याप्तिः, अतो दळद्वयोपादानम्। नचैवमपि प्रकारतानिरूपकत्वज्ञानत्वयोः सत्वात् अनुमित्यादावतिव्याप्तिरिति वाच्यम्, इन्द्रियार्थसन्निकर्षजन्यत्वस्यापि विशेषणीयत्वात्। नचैवं ज्ञानत्वदळवैयर्थ्यं, इच्छादीनां इन्द्रियार्थसन्नि-कर्षजन्यत्वविशेषणेनैव वारणात् इति वाच्यम्, इन्द्रियार्थसन्निकर्षजन्यत्वं विहाय ज्ञानाजन्यत्वस्य विशेषणीयत्वात्। नचैवं सविकल्पकप्रत्यक्षस्य निर्विकल्पकप्रत्यक्षजन्यत्वेनासम्भवः इति वाच्यम्, ज्ञानाकरणत्वस्य तदर्थ-त्वात्, तच्च ज्ञानकरणकभिन्नत्वम्, ज्ञानकरणानि अनुमित्युपमिति शाब्दानि, तद्भिन्नत्वम् इति तदर्थः। अतएव ईश्वरप्रत्यक्षस्येन्द्रियार्थ-सन्निकर्षजन्यत्वाभावेन अव्याप्तिरिति शङ्काऽपि निरस्ता। नचैवमपि स्मृतावतिव्याप्तिः, अनुभवस्य संस्कारंप्रत्येव कारणतावादिमते स्मृतेः संस्कारमात्रजन्यत्वेन ज्ञानाकरणकत्वघटितलक्षणसत्वात् इति वाच्यम्, ज्ञानाकरणकत्वञ्च विहाय प्रत्यक्षत्वजातिमत्वस्य विवक्षितत्वात्। नचैवं ज्ञानत्वदळं व्यर्थं, इच्छादीनां प्रत्यक्षत्वदळेनैव वारणात् इति वाच्यम्, तदा ज्ञानत्वस्य तात्पर्यग्राहकत्वात्। तथाच प्रकारतानिरूपकत्वे सति प्रत्यक्षत्वजातिमत्वं सविकल्पकप्रत्यक्षज्ञानस्य लक्षणं फलितं भवति। एवं पृथक् पृथक् संसर्गतानिरूपकत्वे सति ज्ञानत्वम्, विशेष्यतानिरूप-

करत्वे सति ज्ञानत्वम् इत्यपि सविकल्पकस्य लक्षणं भवतीति ज्ञेयम् । एवं संसर्गत्वानिरूपकत्वे सति ज्ञानत्वम्, विशेष्यत्वानिरूपकत्वे सति ज्ञानत्वम् इत्यपि निर्विकल्पकप्रत्यक्षस्य लक्षणं भवतीत्यपि ज्ञेयम् ॥ सविकल्पकप्रत्यक्षमभिनीय दर्शयति डित्थोऽयमिति, डित्थत्वादिप्रकारकं इदंत्वावच्छिन्नविशेष्यकं ज्ञानं सविकल्पकमित्यर्थः । डित्थोऽयमित्याद्युदाहरणानां चतुर्णां प्रयोगः शब्दानां नामजातिगुणक्रियावाचकत्वभेदेन चातुर्विध्यज्ञापनायैवेति बोध्यम् ॥

मू॰ प्रत्यक्षज्ञानहेतुरिन्द्रियार्थसन्निकर्षः षड्विधः। संयोगः, संयुक्तसमवायः, संयुक्तसमवेतसमवायः, समवायः, समवेतसमवायः, विशेषणविशेष्यभावश्चेति। चक्षुषा घटप्रत्यक्षजनने संयोगः सन्निकर्षः। घटरूपप्रत्यक्षे संयुक्तसमवायः, चक्षुस्संयुक्ते घटे रूपस्य समवायात्। रूपत्वसामान्यप्रत्यक्षे संयुक्तसमवेतसमवायः सन्निकर्षः, चक्षुस्संयुक्ते घटे रूपं समवेतं तत्र रूपत्वस्य समवायात्। श्रोत्रेण शब्दसाक्षात्कारे समवायः सन्निकर्षः, कर्णविवरवृत्त्याकाशस्य श्रोत्रत्वाद् शब्दस्याकाशगुणत्वात् गुणगुणिनोः समवायात्। शब्दत्वसाक्षात्कारे समवेतसमवायः सन्निकर्षः, श्रोत्रसमवेते शब्दे शब्दत्वस्य समवायात्। अभावप्रत्यक्षे विशेषणविशेष्यभावः सन्निकर्षः, भूतलं घटाभाववत् इत्यत्र चक्षुस्संयुक्ते भूतले घटाभावस्य विशेषणत्वात्। एवं सन्निकर्षषट्कजन्यं ज्ञानं प्रत्यक्षम्। तत्करण-



मिन्द्रियम्। तस्मादिन्द्रियं प्रत्यक्षप्रमाणमिति सिद्धम् ॥

इति तर्कसङ्ग्रहे प्रत्यक्ष-
परिच्छेदः समाप्तः
श्रीः श्रीः श्रीः

---

असन्निकृष्टपदार्थस्य प्रत्यक्षे भानासम्भवः, इति नियमेन प्रत्यक्षविषयपदार्थे सन्निकर्षस्यावश्यकतया तन्निरूपणावश्यकतायां प्रसक्तायां सन्निकर्षं तं उदाहरति संयोगेत्यादिना ॥ एते लौकिकसन्निकर्षाः । अलौकिकसन्निकर्षाः वक्ष्यन्ते । प्रत्यक्षज्ञानलक्षणघटकीभूतमिन्द्रियार्थसन्निकर्षं दर्शयति संयोगेत्यादिना ॥ द्रव्यप्रत्यक्षे सन्निकर्षमुदाहरति चक्षुषेति, सन्निकर्षाणामेषां पञ्चानामपि प्रथमं इन्द्रियपदं योजनीयम्, इन्द्रियसंयोगः इन्द्रियसंयुक्तसमवायइत्यादिरीत्या ॥ द्रव्यवृत्तिगुणादिप्रत्यक्षे सन्निकर्षमुदाहरति संयुक्तेति। इन्द्रियसंयुक्तं घटादिद्रव्यं तत्समवायः गुणादिषु वर्तते ॥ गुणादिवृत्तिजातिप्रत्यक्षे सन्निकर्षमुदाहरति रूपत्वेति। इन्द्रियसंयुक्तं द्रव्यं, तत्समवेतं गुणादि, तत्समवायः रूपत्वादिजातौ वर्तते ॥ शब्दसाक्षात्कारे सन्निकर्षमुदाहरति श्रोत्रेणेति । अत्रेन्द्रियं श्रोत्रं तत्समवायः शब्दे वर्तते, श्रोत्रस्य गगनरूपत्वेन शब्दश्रोत्रयोः समवायात् ॥ शब्दत्वसाक्षात्कारे सन्निकर्षमुदाहरति शब्दत्वेति । अत्र इन्द्रियं श्रोत्रं, तत्समवेतः शब्दः, तत्समवायः शब्दत्वे वर्तते ॥ अभावप्रत्यक्षे सन्निकर्षमुदाहरति अभावेति । विशेषणविशेष्यभावो नाम

विशेषणतासन्निकर्षः, अस्य प्रथमं इन्द्रियसंयुक्तपदं इन्द्रियसंयुक्तसमवेतपदं इन्द्रियसंयुक्तसमवेतसमवेतपदं समवेतपदं समवेतसमवेतपदं च स्थल-भेदेन संयोज्य तत्तदभावस्थले निर्वाह्यम्। भूतलं घटाभाववदित्यत्र इन्द्रियसंयुक्तं भूतलं, तद्विशेषणं घटाभावः, तद्विशेषणता घटाभावे वर्तते इति इन्द्रियसंयुक्तविशेषणताख्यः सन्निकर्षः अत्र सम्भवतीति बोध्यम्। एवं क्रमेण इतरेषामप्युदाहरणानि स्थलभेदेन द्रष्टव्यानि ॥

श्रीमत् कुरुगंट्युपाह्वयश्रीरामशास्त्रिविरचिते
तर्कसङ्ग्रहसर्वस्वे प्रत्यक्षपरिच्छेदः
समाप्तः शुभं भवतु
श्रीः श्रीः श्रीः

---

श्रीः

शिवाय नमः

# तर्कसङ्ग्रहसर्वस्वे

## अनुमानपरिच्छेदप्रारम्भः

मू* अनुमितिकरणं अनुमानम् ॥

अनुमानं लक्षयति अनुमितिकरणमिति ॥ अनुमितेः करणं अनुमितिकरणं; षष्ठ्याः निरूपितत्वमर्थः, तस्य करणपदार्थैकदेश करणत्वेऽन्वयः तथाच अनुमितिनिरूपितकरणतावदभिन्नमनुमानमिति बोधः। अनुमितिकरणत्वं अनुमानस्य लक्षणम्। अनुमितिकरणत्वञ्च अनुमितित्वावच्छिन्नकार्यतानिरूपितकारणताश्रयत्वे सति (अनुमित्य-साधारणकारणत्वे सति) अनुमितिजनकव्यापारजनकत्वं, अत्र प्रथमं पर्वतो धूमवान् इति पक्षधर्मताज्ञानम्। ततः यत्र धूमः तत्राग्निः (वह्निव्याप्यो धूमः) इति व्याप्तिस्मरणम्। उभाभ्यां आभ्यां विशेषण-ज्ञानरूपाभ्यां वह्निव्याप्यधूमवान् पर्वत इति परामर्शः (परामर्शनामक-निश्चयः)। ततः पर्वतो वह्निमान् इत्यनुमितिः। इति व्याप्तिस्मृति-परामर्शानुमितीनां उत्पत्तिक्रमः (हेतुहेतुमद्भावः) अत्र लक्षणसमन्वयस्तु, अनुमितित्वावच्छिन्ना या कार्यता पर्वतो वह्निमान् इत्यनुमितौ विद्यमाना

कार्यता, तन्निरूपिता या कारणता वह्निव्याप्यो धूमः इत्याकारके व्याप्तिज्ञाने (अनुमाने) विद्यमाना कारणता, तदाश्रयत्वस्य परामर्शरूपव्यापारजनकत्वस्य च (अनुमाने) व्याप्तिज्ञाने विद्यमानत्वात् लक्ष्ये लक्षणसमन्वयः। व्यापारजनकत्वमात्रोक्तौ कालेश्वरादृष्टादेः कार्यमात्रं प्रति जनकत्वेन व्यापारजनकत्वस्यापि सत्वात् अतिव्याप्तिः, अनुमितिनिष्ठकार्यतानिरूपितकारणताश्रयत्वनिवेशेऽपि तत्रैवातिव्याप्तिः, तद्वारणाय अनुमितित्वावच्छिन्नकार्यतानिरूपितकारणताश्रयत्वं निवेशनीयम्, तन्निवेशे तु कालेश्वरादृष्टादौ तस्याभावात् नातिव्याप्तिः। अनुमितित्वावच्छिन्नकार्यतानिरूपितकारणताश्रयत्वमात्रोक्तौ (अनुमित्यसाधारणकारणत्वमात्रोक्तौ) व्यापारभूतपरामर्शस्यापि अनुमित्यसाधारणकारणत्वेन तत्रातिव्याप्तिः, अनुमितिजनकव्यापारजनकत्वनिवेशेतु स्वस्मिन् स्वजनकत्वाभावात् नातिव्याप्तिः। नच व्यापारत्वावच्छिन्नकार्यतानिरूपितकारणताश्रयत्वविवक्षणेनैवेश्वरादृष्टादावतिव्याप्तिवारणसम्भवे अनुमित्यसाधारणकारणत्वनिवेशस्यैव नैष्फल्यमिति वाच्यम्, व्यापारत्वेन व्याप्तिज्ञानत्वेन कार्यकारणभावाभावेन असम्भवप्रसङ्गात्। नच विशिष्य परामर्शत्वा-

---

अनुमितिकरणमनुमानमित्यत्र ॥ नच सिद्धिसमकालीने सिषाधयिषाऽसमानाधिकरणे व्याप्तिज्ञाने (अनुमाने) अनुमितिकरणत्वाभावात् अव्याप्तिरितिवाच्यम्, अनुमितिजनकज्ञानवृत्तिधर्मवत्वस्य विवक्षितत्वात्। नच अनुमितिजनकज्ञानवृत्तिप्रमेयत्वादिधर्मवत्वस्य व्यापारजनकत्वस्य च ईश्वरादृष्टादौ सत्वात् अतिव्याप्तिरिति वाच्यम्, अनुमितित्वावच्छिन्न-



वच्छिन्नकार्यतानिरूपितकारणताश्रयत्वनिवेशेनैव ईश्वरादृष्टादावतिव्याप्तेरसम्भवस्य च अभावात् अनुमितित्वावच्छिन्नहेतुत्वनिवेशनमफलमेवेति वाच्यम्, व्याप्तिपक्षधर्मताज्ञानयोः उभयोरपि विशेषणज्ञानमुद्रया परामर्शहेतुत्वेन परामर्शत्वावच्छिन्नकार्यतानिरूपितकारणताश्रयत्वस्य पक्षधर्मताज्ञाने सत्वात् अतिव्याप्त्यापत्तेः। अनुमितित्वावच्छिन्नकार्यतानिरूपितकारणताश्रयत्वनिवेशे तु पक्षधर्मताज्ञानस्य परामर्शं प्रत्येव हेतुतया अनुमितित्वावच्छिन्नं प्रत्यहेतुतया अनुमित्यसाधारणकारणत्वस्य तत्राभावात् नातिव्याप्तिः। व्याप्तिज्ञानस्य तु अनुमितिकरणत्वप्रतीत्या अनुमितित्वावच्छिन्नकार्यतानिरूपितकारणताश्रयत्वस्यापि तत्र सत्वात् लक्षणसमन्वयः॥

**मू* परामर्शजन्यं ज्ञानं अनुमितिः॥**

घटितबुद्धौ घटकज्ञानस्य कारणत्वात् अनुमानलक्षणघटकीभूतानुमितिं लक्षयति परामर्शजन्यमिति॥ परामर्शजन्यत्वे सति ज्ञानत्वमनुमितेः

---

जनकतावच्छेदकः व्यापारजनकतावच्छेदकश्च यो धर्मः तद्वत्वस्य विवक्षितत्वात्। सिद्धिसमकालीनव्याप्तिज्ञाने तादृशधर्मस्य व्याप्तिज्ञानत्वस्य च सत्वात् समन्वयः। ईश्वरादृष्टादौ तस्य अभावात् नातिव्याप्तिः च। अथवा पक्षतासहकृतव्याप्तिज्ञानस्यैव अनुमानत्वाङ्गीकारेण सिद्धिसमकालीनस्य अनुमित्यनुपधायकस्य व्याप्तिज्ञानस्य अनुमानत्वमेव न स्वीक्रियते इतिनाव्याप्तिशङ्कावकाशः॥

लक्षणम् । पूर्वनिर्दिष्टमुत्पत्तिक्रममनुसृत्य परामर्शजन्यत्वस्य च अनुमितौ सत्वात् समन्वयः । परामर्शजन्यत्वमात्रोक्तौ ध्वंसं प्रति प्रतियोगिनः कारणत्वेन परामर्शध्वंसेऽपि परामर्शजन्यत्वस्य सत्वात् अतिव्याप्तिः, ज्ञानत्वनिवेशे तु ध्वंसे ज्ञानत्वस्याभावात् नातिव्याप्तिः। ज्ञानत्वमात्रोक्तौ प्रत्यक्षज्ञानादावतिव्याप्तिः, परामर्शजन्यत्वनिवेशे तु प्रत्यक्षज्ञानस्य इन्द्रियार्थसन्निकर्षजन्यत्वेन तत्र परामर्शजन्यत्वाभावात् नातिव्याप्तिः । नच परामर्शनिष्ठजनकतायां समवायसम्बन्धावच्छिन्नत्वनिवेशेनैव परामर्शध्वंसेऽतिव्याप्तिवारणात् ज्ञानत्वदळवैयर्थ्यं दुर्वारं, प्रतियोगितासम्बन्धेन जायमानध्वंसं प्रति तादात्म्यसम्बन्धेन प्रतियोगिनः कारणत्वेन समवायसम्बन्धावच्छिन्नपरामर्शनिष्ठकारणतानिरूपितकार्यत्वस्य परामर्शध्वंसेऽभावात् इति वाच्यम्, समानविषयकानुभवस्य संस्कारं प्रति समवायसम्बन्धेनैव कारणतया परामर्शनिष्ठसमवायसम्बन्धावच्छिन्नजनकतानिरूपितजन्यत्वस्य साध्यव्याप्यहेतुमत्पक्षविषयकसंस्कारे सत्वात् अतिव्याप्तिवारणाय ज्ञानत्वदळसार्थक्यात् । समवायसम्बन्धेन जायमानानुमितिं प्रति समवायसम्बन्धेन परामर्शस्य कारणत्वात् लक्षणसमन्वयः । एतेन प्रत्यक्षे विषयस्य कारणतया परामर्शप्रत्यक्षेऽपि परामर्शजन्यत्वज्ञानत्वयोः सत्वात् तत्राति व्याप्तिरिति शङ्का निरस्ता, प्रत्यक्षे विषयस्य तादात्म्यसम्बन्धेनैव कारणत्वात् समवायसम्बन्धेन कारणत्वाभावात् ॥

**मू* व्याप्तिविशिष्टपक्षधर्मताज्ञानं परामर्शः, यथा, वह्निव्याप्यधूमवान् अयं पर्वतः इति ज्ञानं परा-**



**मर्शः। तज्जन्यं पर्वतो वह्निमान् इति ज्ञानं अनुमितिः ॥**

अनुमितिलक्षणघटकीभूतपरामर्शं लक्षयति व्याप्तिविशिष्टेति ॥ व्याप्तिविशिष्टञ्च तत् पक्षधर्मताज्ञानञ्च इति कर्मधारयः, व्याप्त्या विशिष्टमित्यत्र तृतीयायाः आधेयत्वं, विशिष्टपदस्य प्रकारतानिरूपकं, पक्षधर्मतायाः ज्ञानमित्यत्र षष्ठ्याः विषयतानिरूपकत्वं, धर्मतापदस्य सम्बन्धश्च अर्थः, तृतीयार्थाधेयत्वस्य प्रकारतायां षष्ठ्यर्थविषयतानिरूपकत्वस्य ज्ञाने च अन्वयः (निपातातिरिक्तनामार्थयोरभेदसम्बन्धेनान्वयः, इति नियमेन अत्र व्याप्तिनिष्ठप्रकारतानिरूपकाभिन्नं पक्षसम्बन्धविषयकं ज्ञानं परामर्शः इति बोधः । व्याप्तिनिष्ठप्रकारतानिरूपकत्वे सति पक्षसम्बन्धविषयकत्वे सति ज्ञानत्वं परामर्शस्य लक्षणम्, वह्निव्याप्यधूमवान् पर्वतः इति ज्ञाने धूमांशे व्याप्तिः प्रकारत्वेन व्याप्तिनिष्ठप्रकारतानिरूपकत्वस्य विशेषणविशेष्यावगाहिज्ञाने तयोस्सम्बन्धस्यापि विषयत्वनियमेन पर्वतांशे धूमस्य प्रकारत्वेन तत्र धूमपर्वतसम्बन्धस्य संयोगस्यापि विषयत्वस्याङ्गीकार्यतया पक्षसम्बन्धविषयकत्वज्ञानत्वयोश्च सत्वात् लक्षणसमन्वयः । ज्ञानत्वमात्रोक्तावनुमितावतिव्याप्तिः । ज्ञानत्वानुपादाने वह्निव्याप्यधूमवत्पर्वतविषयकसंस्कारादौ अतिव्याप्तिः, तत्रापि तत्तद्विषयकत्वस्य अक्षतत्वात्, ज्ञानत्वनिवेशे संस्कारादौ ज्ञानत्वाभावात् नातिव्याप्तिः । व्याप्तिविषयकत्वे सति ज्ञानत्वमात्रोक्तौ वह्निव्याप्यो धूमः इति व्याप्तिस्मृतौ (अनुमाने) अतिव्याप्तिः । पक्षसम्बन्धविषयकत्वे सति ज्ञानत्वमात्रोक्तौ धूमवान् पर्वतः इति पक्षधर्मता ज्ञानेऽतिव्याप्तिः, अतः पक्षसम्बन्ध-

विषयकत्वव्याप्तिप्रकारकत्वयोः उपादानम् । परामर्शमभिनीय दर्शयति यथेति ॥ अनुमितिमभिनीय दर्शयति तज्जन्यमिति ॥

**मू॰* यत्र यत्र धूमः तत्राग्निः इति साहचर्यनियमो व्याप्तिः ॥**

व्याप्तेः लक्षणमाह यत्रेति ॥ (धूमपदसमभिव्याहृततत्पदेन धूमाधिकरणं वीप्सया यावत्त्वञ्च बोध्यते, तथाच, धूमाधिकरणे यावति वह्निरिति लभ्यते; तथाच (यद्धर्मावच्छिन्नवाचकपदसमभिव्यावहारदशायां यावत्पदं श्रूयते तद्धर्मव्यापकत्वं विधेयांशे भासते, इति नियमेन धूमाधिकरणबोधकपदसमभिव्याहृतयावत्पर्यवसायिद्विर्वचनश्रुत्या धूमव्यापकत्वं विधेयीभूतवह्न्यंशे भासते, तथाच, धूमव्यापकत्वस्य वह्न्यंशे भाने तुल्यवित्तिवेद्यतया वह्निव्याप्यत्वञ्च धूमे लभ्यते, वह्निव्याप्यत्वस्य वह्न्यभाववदवृत्तित्वे सति वह्निसामानाधिकरण्यरूपतया तदभाववदवृत्तित्वांशस्य प्रयोजनाभावेन त्यागे वह्निसामानाधिकरण्यमात्रं गृह्यते, तथाच, धूमव्यापकवह्निसामानाधिकरण्यं व्याप्तिरिति फलितम् । साहचर्यनियमः इत्यत्र नियमपदस्थाने नियतपदं संयोज्य व्युत्क्रमेण योजने च नियत साहचर्यमिति लभ्यते ।) साहचर्यनियमः नियतसाहचर्यम् । नियतत्वञ्च व्यापकत्वं, साहचर्यञ्च सामानाधिकरण्यम्, तथाच, धूमाधिकरणवृत्त्य-

---

साहचर्यनियमो व्याप्तिरित्यत्र ॥ साहचर्यं सामानाधिकरण्यम्, नियमः नियमवत्, कृदभिहितो भावो द्रव्यवत्प्रकाशते इति न्यायात्, तदर्थश्च कृता बोध्यमानः भवोः धात्वर्थः द्रव्यवदित्यत्र सप्तम्यन्ताद्वतिः,



त्यन्ताभावाप्रतियोगिवह्न्यधिकरणवृत्तित्वं व्याप्तिः इति विशेषलक्षणं फलितम् । सामान्यलक्षणन्तु हेत्वधिकरणवृत्त्यत्यन्ताभावाप्रतियोगिसाध्य-सामानाधिकरण्यं व्याप्तिरिति पर्यवसन्नम् । तथाच, पर्वतो वह्निमान् धूमात् इत्यत्र धूमरूपहेतौ लक्षणसमन्वयः, तथाहि, हेतुः धूमः, तदधिकरणं महानसः, तद्वृत्तिः योऽत्यन्ताभावः नहि वह्न्यभावः तत्र वह्नेः सत्वात्, किन्तु घटाभावः, तत्प्रतियोगि घटादिकं, अप्रतियोगि यत्साध्यं वह्न्यात्मकं साध्यं, तदधिकरणं महानसः, तद्वृत्तित्वं धूमे वर्तते इति । पर्वतो धूमवान् वह्नेः इत्यत्र वह्निरूपासद्धेतौ नातिव्याप्तिश्च, तथाहि हेतुः वह्निः, तदधिकरणं अयोगोलकं, तद्वृत्तिः योऽत्यन्तभावः, धूमाभावः तत्प्रतियोग्येवसाध्यीभूतधूमः, अप्रतियोगि साध्यं न भवतीति नातिव्याप्तिः । नचैवमपि वह्निमान् धूमात् इत्यत्र धूमरूपहेतावव्याप्तिः, हेत्वधिकरण-महानसादिषु चालनीन्यायेन वर्तमानानां तत्तद्व्यक्तित्वेन तत्तद्वह्न्य-भावानां सर्वस्यापि वह्नेः प्रतियोगित्वात् इति वाच्यम्, हेत्वधिकरण वृत्त्यत्यन्ताभावप्रतियोगितानवच्छेदकत्वस्य साध्यतावच्छेदके निवेशनी-

---

स्वाश्रये बोध्यमान इवेति यावत्, तथाच कृद्बोध्यमानो भावः स्वाश्रय-विशेषणतयापि प्रकाशते इति फलितम्, तथाच नियतं सायचर्यम् इति फलितम्, नियतत्वं व्यापकनिरूपितत्वम्, यत्र धूमः तत्रेति पदत्रयं तात्पर्यग्राहकम्, वह्निपदं धूमव्यापकवह्निसामानाधिकरण्यलक्षकम्, इति पदार्थश्चाभेदः, तस्य साहचर्येन्वयः, एवञ्च धूमव्यापकवह्निसामानाधिकरण्याभिन्नं नियतं सामानाधिकरण्यं व्याप्तिः इत्यन्वयः ॥

यत्वात्, तन्निवेशे च हेत्वधिकरणतत्तद्व्यक्तिवृत्त्यभावप्रतियोगितावच्छेदकत्वस्य तत्तद्व्यक्तित्वे सम्भवेऽपि तदनवच्छेदकत्वस्य साध्यतावच्छेदके सत्वात् तदवच्छिन्नसामानाधिकरण्यमादाय लक्षणसमन्वयसम्भवात् नाव्याप्तिप्रसक्तिः ॥

**मू* व्याप्यस्य पर्वतादिवृत्तित्वं पक्षधर्मता ॥**

पक्षधर्मतास्वरूपमुदाहरति व्याप्यस्येति ॥ षष्ठ्याः आधेयत्वं, पर्वतादौ वृत्तित्वमित्यत्र सप्तम्याः निरूपितत्वञ्च अर्थः, तथाच, व्याप्यनिष्ठपर्वतादिनिरूपितवृत्तित्वं पक्षधर्मतेति बोधः ॥

**मू* अनुमानं द्विविधम्, स्वार्थं परार्थञ्चेति । स्वार्थं स्वानुमितिहेतुः। तथाहि, स्वयमेव भूयोदर्शनेन यत्र धूमः तत्राग्निरिति महानसादौ धूमे वह्निव्याप्तिं गृहीत्वा पर्वतसमीपं गतः तद्गते च अग्नौ सन्दिहानः पर्वते धूमं पश्यन् व्याप्तिं स्मरति यत्र धूमः तत्राग्निरिति । तदनन्तरं वह्निव्याप्य धूमवानयं पर्वतः इति ज्ञानमुत्पद्यते । अयमेव लिङ्गपरामर्शः इत्युच्यते । तस्मात् पर्वतो वह्निमान् इत्यनुमितिरुत्पद्यते । तदेतत् स्वार्थानुमानम् ॥**

स्वार्थानुमानं दर्शयति स्वयमेवेति ॥ (स्वस्यार्थः अनुमितिरूपं प्रयोजनं यस्मात्तत् स्वार्थं, स्वार्थञ्च तत् अनुमानञ्च इति समासः) न्यायाप्रयोज्यत्वे सति अनुमानत्वं स्वार्थानुमानस्य लक्षणम् । (न्यायः पञ्चावयववाक्यसमुदायः) अनुमानत्वमात्रोक्तौ परार्थानुमाने न्यायप्रयोज्यत्वमात्रोक्तौ घटादौ च अतिव्याप्तिरितिदलद्वयोपादानम् ॥ अत्र च स्वार्थानुमानसामग्रीं दर्शयति स्वयमेवेत्यादिना । प्रथमं, भूयोदर्शनेनेत्यनेन भूयोदर्शनम् तदनु, महानसादौ वह्निव्याप्तिं गृहीत्वेत्यनेन व्याप्त्यनुभवः। तद्गते चाग्नौ सन्दिहानः इत्यनेन साध्यसंशयरूपा पक्षता। पर्वते धूमं पश्यन् इत्यनेन पक्षधर्मताज्ञानं । व्याप्तिं स्मरतीत्यनेन व्याप्तिस्मृतिः । (सा च एकसम्बन्धिज्ञानमपरसम्बन्धिस्मारकमिति, न्यायेन पक्षधर्मताज्ञानस्य एकसम्बन्धिरूपधूमविषयकज्ञानत्वेन अपरसम्बन्धिन्याः व्याप्तेः स्मारकत्वात् पक्षधर्मताज्ञानरूपैकसम्बन्धिज्ञानजन्या भवति) व्याप्तिस्मृत्युत्तरं परामर्शः । तदन्वनुमितिः, इति क्रमः अनेन वाक्यसमुदायेन बोध्यते ॥



**मू* यत्तु स्वयमेव धूमादग्निमनुमाय परप्रतिपत्त्यर्थं पञ्चावयववाक्यं प्रयुङ्क्ते तत्परार्थानुमानम् । यथा, पर्वतो वह्निमान्, धूमवत्वात्, योयो धूमवान् स सोऽग्निमान् यथा महानसः तथा चायं, तस्मात्तथेति । अनेन वाक्येन प्रतिपादितात् लिङ्गाद् परोऽप्यग्निं प्रतिपद्यते । प्रतिज्ञाहेतूदाहरणोपनयनिगमनानि पञ्च अवयवाः पर्वतो वह्निमानिति प्रतिज्ञा । धूमवत्वादिति हेतुः । यो यो धूमवान् सोऽग्निमान् यथा महासनः इत्युदाहरणम् । तथाचायमित्युपनयः । तस्मात्तथेति निगमनम् । स्वार्थानुमितिपरार्था-**

नुमित्योः लिङ्गपरामर्श एव करणं, तस्माल्लिङ्ग-
परामर्शोऽनुमानम् ।

परार्थानुमानमुदाहरति यत्त्विति ॥ न्यायप्रयोज्यत्वे सत्यनुमानत्वं परार्थानुमानस्य लक्षणम् । अनुमानत्वमात्रोक्तौ स्वार्थानुमाने न्याय-प्रयोज्यत्वमात्रोक्तौ न्यायध्वंसे च अतिव्याप्तिः, अतोदळद्वयोपादानम् ॥ अवयवनामान्युदाहरति प्रतिज्ञेति । क्रमेणावयवस्वरूपमाह पर्वतो वह्निमानिति । उदाहृतवाक्ये प्रतिज्ञादिविभागमाह पर्वतो वह्निमानिति प्रतिज्ञेति । पञ्चावयववाक्यप्रयोज्यशाब्दबोधप्रकारः इत्थम्, प्रतिज्ञावाक्यात् वह्निमदभिन्नः पर्वतः इति बोधः । हेतुवाक्यात् धूमादित्यत्र पञ्चम्याः हेतुत्वार्थकतया धूमस्याधेयत्वसम्बन्धेन हेतुत्वेऽन्वये च धूमनिष्ठं हेतुत्वमितिबोधः । उदाहरणवाक्यात् यो यः स स इत्यादिपदानां अग्निपदस्य धूमव्यापकवह्नौ लक्षणायां तात्पर्यग्राहकतया विनियुक्तत्वेन धूमवान् धूमव्यापकवह्निमान् इति बोधः भवति । उपनयवाक्यात् तच्छब्देन वह्निव्याप्यधूमबोधने थाल्प्रत्ययस्य आश्रयत्वार्थकत्वे च वह्निव्याप्यधूमवान् पर्वतः इति बोधः भवति । निगमनवाक्यात् तच्छब्दस्य वह्निव्याप्यधूमपरामर्शकत्वे पञ्चम्या ज्ञानज्ञाप्यत्वबोधने च वह्निव्याप्यधूमज्ञान-

---

यत्तु स्वयमेव धूमादग्निमनुमायेत्यत्र ॥ नन्वत्र यत्तु पञ्चावयववाक्यमित्यत्र यच्छब्दस्य पञ्चावयववाक्यपरतया परार्थानुमानस्य व्याप्तिज्ञानरूपतया उभयोः भेदात् तत् परार्थानुमानमिति तच्छब्देन परामर्शोऽनुपपन्नः, यत्तच्छब्दार्थयोरैक्यनियमात्, प्रकृते तदभावात् इतिचेन्न, परस्यार्थः अनुमितिरूपं प्रयोजनं यस्मात् तत् परार्थं, परार्थमनुमानं यस्मात्



ज्ञाप्यवह्निमान् पर्वतः इति बोधः भवति । अत्र पूर्वपूर्वबोधोत्पन्नसंस्कारसहितचरमवाक्यजनिततावद्वाक्यार्थविषयकसमूहालम्बनबोधानन्तरं मानसिकं वह्निव्याप्यधूमवान् पर्वतः इति परामर्शमात्रमुत्पद्यते, नतु पृथक् पक्षधर्मताज्ञानं व्याप्तिस्मृतिश्च भवतः, तयोः पृथक्कल्पने गौरवात् प्रत्येकशाब्दबोधैः तत्स्थानापन्नैरेव चारितार्थ्यात् । ननु सर्वत्र करणत्वस्य व्यापारजनकत्वघटिततया पक्षधर्मत्वाविषयकस्य व्याप्तिज्ञानमात्रस्यैव परामर्शद्वाराऽनुमितिकरणत्वेन स्वार्थानुमितिपरार्थानुमित्योः लिङ्गपरामर्श एव करणमिति कथनमनुपपन्नमिति चेन्न, स्वार्थानुमानस्थले पूर्वोक्तक्रमेण व्याप्तिपक्षधर्मताज्ञानयोः पृथक् सम्भवेऽपि परार्थानुमानस्थले केवलशाब्दपरामर्शस्थले च तयोः सम्भवाभावेन परामर्शस्य तूभयत्र सम्भवेन च अनुपपत्तेः अभावात् । नचैवं परामर्शस्य व्यापाराभावात् करणत्वमनुपपन्नमिति वाच्यम्, करणत्वलक्षणे व्यापारजनकत्वविशेषणाभावेऽपि क्षत्यभावात् । नचैवं व्यापारे (परामर्शे) अनुमानलक्षणातिव्याप्तिरिति वाच्यम्, तस्य लक्ष्यत्वात् ॥

---

तत् इति उभयत्र बहुव्रीहिसमासादरे परार्थानुमानप्रयोजकस्य पञ्चावयववाक्यस्य बोध्यत्वेन तत् परार्थानुमानमिति तच्छब्देन परामर्शे अनुपपत्त्यभावात् ॥ यद्वा, यदित्यस्याव्ययतया चतुर्थीविभक्त्यर्थबोधकत्वमङ्गीकृत्य यत् यदर्थम् यादृशलिङ्गपरामर्शार्थं पञ्चावयववाक्यं प्रयुङ्क्ते तत् लिङ्गपरामर्शोऽनुमानम् इति समन्वये पूर्वोक्तानुपपत्त्यभावात्, यत्तच्छब्दयोरेकार्थकत्वमपि सम्भवतीति नानुपपत्तिः ॥ अथवा, आयुः घृतं लाङ्गलं जीवनं इतिवत् प्रयोज्यप्रयोजकयोः अभेदोपचारात् उपपत्तिः बोध्या ॥

मू* लिङ्गं त्रिविधं, अन्वयव्यतिरेकि, केवलान्वयि, केवलव्यतिरेकिचेति। अन्वयेन व्यतिरेकेण व्याप्तिमत् अन्वयव्यतिरेकि, यथा, वह्नौसाध्ये धूमवत्त्वं। यत्र धूमः तत्राग्निः यथा महानसः इत्यन्वयव्याप्तिः। यत्र वह्निः नास्ति तत्र धूमोऽपि नास्ति यथा महाह्रदइति व्यतिरेकव्याप्तिः॥

लिङ्गं विभजते अन्वयव्यतिरेकीति॥ अन्वयव्यतिरेकिणं लक्षयति अन्वयेनेति। अन्वयः साध्यः, व्यतिरेकः साध्याभावः तृतीयायाः निरूपितत्वमर्थः, तथाच अन्वयनिरूपितव्याप्तिमत्त्वे सति व्यतिरेकनिरूपितव्याप्तिमत्त्वं अन्वयव्यतिरेकिणो लक्षणं इति फलितम्। अन्वयव्याप्तिमत्त्वञ्च हेत्वधिकरणवृत्त्यत्यन्ताभावाप्रतियोगिसाध्याधिकरणवृत्तित्वं। व्यतिरेकव्याप्तिमत्त्वञ्च साध्याभावव्यापकीभूताभावप्रतियोगित्वम्। तच्च साध्याभावाधिकरणवृत्त्यत्यन्ताभावाप्रतियोग्यभावप्रतियोगित्वम्। तथाच पर्वतो वह्निमान् धूमात् इत्यत्र धूमरूपसद्धेतौ लक्षणसमन्वयः, (अत्र पर्वतः पक्षः वह्निः साध्यः धूमो हेतुः) तथाहि, हेतुः धूमः, तदधिकरणं महानसः, तद्वृत्तिः योऽत्यन्ताभावः नहि वह्न्यभावः किन्तु घटाद्यभावः, तत्प्रतियोगी घटादिः, तदप्रतियोगी यस्साध्यः वह्निरूपः साध्यः, तदधिकरणं महानसः, तद्वृत्तित्वं धूमे वर्तते। साध्यः वह्निः साध्याभावः वह्न्यभावः, तदधिकरणं ह्रदः, तद्वृत्तिः योऽत्यन्ताभावः नहि धूमाभावाभावः परन्तु धूमाभावः, तत्प्रतियोगी धूमः, तदप्रतियोगी योऽभावः धूमाभावः तत्प्रतियोगित्वञ्च धूमे वर्तते इति लक्षणसमन्वयः। अन्वयव्याप्तिमत्त्वमात्रोक्तौ केवलान्वयिनि घटः अभिधेयः प्रमेयत्वात् इत्यत्र



प्रमेयत्वरूपहेतौ अतिव्याप्तिः, (अत्र घटः पक्षः, अभिधेयत्वं साध्यं प्रमेयत्वं हेतुः) तथाहि, हेतुः, प्रमेयत्वम् (ईश्वरीयप्रमाविषयत्वम्) तदधिकरणं घटादिः, तद्वृत्तिः, योऽत्यन्ताभावः नहि अभिधेयत्वाभावः अभिधेयत्वस्यैव (ईश्वरेच्छा-विषयत्वस्यैव) सर्वत्रापि विद्यमानत्वात् किन्तु पटाद्यभावः, तदप्रतियोगि यत् साध्यं अभिधेयत्वरूपं साध्यं, तदधिकरणं घटादिः, तद्वृत्तित्वं प्रमेयत्वे वर्तते इति। अतः तद्वारणाय व्यतिरेकव्याप्तिशून्यत्वदळम् तन्निवेशे तु तत्र साध्याभावस्याप्रसिद्धत्वेन तद्घटितव्यतिरेकव्याप्तिमत्त्वस्य तत्राभावात् नातिव्याप्तिः। व्यतिरेकव्याप्तिमत्त्वमात्रोक्तौ पृथिवी इतरभिन्ना गन्धवत्वात् इत्यत्र गन्धवत्त्वरूपकेवलव्यतिरेकिहेतौ अतिव्याप्तिः (अत्र पृथिवी पक्षः पृथिवीतरभेदः साध्यः गन्धवत्वम् हेतुः) तथाहि, साध्याभावः पृथिवीतरभेदाभावः तदधिकरणं जलादिकं, तद्वृत्तिः, योऽत्यन्ताभावः नहि गन्धाभावाभावः परन्तु गन्धाभावः, तत्प्रतियोगी गन्धः तदप्रतियोगी योऽभावः गन्धाभावः तत्प्रतियोगित्वं गन्धे वर्तते इति। अतः तद्वारणाय अन्वयव्याप्तिमत्त्वं निवेशनीयम्। तन्निवेशे तु गन्धाधिकरणे सर्वत्रापि पृथिवीतरभेदस्य विद्यमानत्वेन हेतुव्यापकसाध्यसामानाधिकरण्यरूपान्वयव्याप्तेः प्रकृतहेतौ सत्त्वेपि पृथिवीमात्रस्य पक्षत्वेन जलादौ हेतुसाध्ययोरभावेन च दृष्टान्ताभावेन अन्वयव्याप्तिनिश्चयस्य असम्भवेन वस्तुतः अन्वयव्याप्तिमत्त्वस्य सत्त्वेऽपि निश्चितान्वयव्याप्तिमत्त्वस्यैव अन्वयव्यतिरेकिलक्षणघटकत्वेनाङ्गीकर्तव्यतया गन्धवत्त्वरूपहेतौ निश्चितान्वयव्याप्तिमत्त्वस्याभावात् नातिव्याप्तिः॥

**मू* अन्वयमात्रव्याप्तिकम् केवलान्वयि। यथा, घटोऽभिधेयः प्रमेयत्वात् पटवत् इत्यत्र प्रमेयत्वाभिधेयत्वयोः व्यतिरेकव्याप्तिः नास्ति, सर्वस्यापि प्रमेयत्वात् अभिधेयत्वाच्च॥**

केवलान्वयिलिङ्गं लक्षयति अन्वयेति॥ अत्र मात्रपदस्य इतरव्यवच्छेदार्थकतया व्यतिरेकव्याप्तिशून्यत्वे सति अन्वयव्याप्तिमत्त्वं केवलान्वयिनो लक्षणमिति फलितम्। घटोऽभिधेयः प्रमेयत्वात् इत्यत्र प्रमेयत्वरूपहेतौ लक्षणसमन्वयः। (अत्र घटः पक्षः, अभिधेयत्वं साध्यम्, प्रमेयत्वं हेतुः) ईश्वरीयज्ञानेच्छाकृतीनां विनिगमनाविरहेण सर्वविषयकत्वस्याङ्गीकर्तव्यतया ईश्वरीयज्ञानतदिच्छाविषयत्वयोः सर्वस्मिन्नपि जगति वर्तमानतया प्रमेयत्वं अभिधेयत्वञ्च केवलान्वयिनी (सर्वत्र वर्तमाने) भवतः। तथाच अत्र हेतुः प्रमेयत्वं, तदधिकरणं घटादिः तद्वृत्तिः योऽत्यन्ताभावः नहि अभिधेयत्वाभावः, परन्तु पटाद्यभावः, तत्प्रतियोगी पटादिः, तदप्रतियोगि यत् साध्यं अभिधेयत्वरूपं साध्यं, तदधिकरणं घटादिः, तद्वृत्तित्वं प्रमेयत्वे वर्तते, अत्र साध्याभावस्याप्रसिद्धत्वेन व्यतिरेकव्याप्तिप्रसक्त्यभावेन व्यतिरेकव्याप्तिशून्यत्वञ्च अस्तीति लक्षणसमन्वयः। अन्वयव्याप्तिमत्त्वमात्रोक्तौ अन्वयव्यतिरेकिणि अतिव्याप्तिः, तद्वारणाय व्यतिरेकव्याप्तिशून्यत्वम्, तन्निवेशे तत्र व्यतिरेकव्याप्तेरपि सम्भवेन तच्छून्यत्वस्याभावात् नातिव्याप्तिः। व्यतिरेकव्याप्तिशून्यत्वमात्रोक्तौ पर्वतो धूमवान् वह्नेः इत्यत्र (अत्र पर्वतः पक्षः धूमः साध्यः, वह्निः हेतुः) वह्निरूपव्यभिचारिहेतौ अन्वयव्यतिरेकव्याप्त्योः



द्वयोरप्यभावेन व्यतिरेकव्याप्तिशून्यत्वस्यापि सम्भवात् अतिव्याप्तिः, अन्वयव्याप्तिमत्त्वनिवेशे तु तस्यासद्धेतुतया अन्वयव्याप्तिमत्त्वस्याप्यभावात् नातिव्याप्तिः॥

**मू* व्यतिरेकमात्रव्याप्तिकं केवलव्यतिरेकि। यथा, पृथिवी इतरेभ्यो भिद्यते गन्धवत्त्वात्। यदितरेभ्यो न भिद्यते न तत् गन्धवत्, यथा, जलं। नचेयं तथा। तस्मात् न तथेति। अत्र यत् गन्धवत् तदितरभिन्नं इत्यन्वयदृष्टान्तो नास्ति। पृथिवीमात्रस्य पक्षत्वात्॥**

केवलव्यतिरेकिणो लक्षणमाह व्यतिरेकेति॥ (अत्र पृथिवी पक्षः, इतरभेदः साध्यः, गन्धवत्त्वं हेतुः) (केवलव्यतिरेकः अत्रास्तीति केवलव्यतिरेकि, व्यतिरेकव्याप्तिरेवात्र विद्यते नान्वयव्याप्तिरित्यर्थः) अन्वयव्याप्तिशून्यत्वे सति व्यतिरेकव्याप्तिमत्त्वं केवलव्यतिरेकिणो लक्षणम् अत्र साध्यः पृथिवीतरभेदः, तदभावः पृथिवीतरभेदाभावः, तदधिकरणं जलादिकं, तद्वृत्तिः योऽत्यन्ताभावः नहि गन्धाभावाभावः किन्तु गन्धाभावः तत्प्रतियोगी गन्धः, अप्रतियोगी योऽभावः गन्धाभावः तत्प्रतियोगित्वं गन्धे वर्तते एवं हेत्वधिकरणं पुष्पादि, तद्वृत्तिः योऽत्यन्ताभावः नहि इतरभेदाभावः किन्तु पटाद्यभावः, तत्प्रतियोगी पटादिः, तदप्रतियोगी यः साध्यः पृथिवीतरभेदरूपः साध्यः, तदधिकरणं पृथिवी, तद्वृत्तित्वस्यापि गन्धे सत्वेनान्वयव्याप्तिशून्यत्वासम्भवेऽपि अत्र लक्षणे निश्चितान्वयव्याप्तिशून्यत्वस्यैव निवेशनीयतया अत्र पृथिवीमात्रस्य पक्षत्वेन जलादौ

हेतुसाध्ययोः अभावेन च यत्र गन्धः तत्र इतरभेदः इत्यत्र अन्वयदृष्टान्ताभावेन अन्वयव्याप्तिनिश्चयासम्भवेन निश्चितान्वयव्याप्तिशून्यत्वरूपलक्षणमपि गन्धरूपहेतौ उपपद्यते इति लक्षणसमन्वयः। अन्वयव्याप्तिशून्यत्वमात्रोक्तौ पर्वतो धूमवान् वह्नेः इत्यत्र वह्निरूपहेतावतिव्याप्तिः। व्यतिरेकव्याप्तिमत्वमात्रोक्तौ अन्वयव्यतिरेकिणि अतिव्याप्तिः, अतो दळद्वयोपादानम्॥ केवलव्यतिरेकिस्थले पञ्चावयववाक्यमुदाहरति यदिति॥ यत् जलं, इतरेभ्यः न भिद्यते इतरभेदाभाववत्, तज्जलं, न गन्धवत् गन्धाभाववत्, नचेयं तथा, इयं पृथिवी न तथा गन्धाभाववती न, किन्तु गन्धाभावाभाववती गन्धवतीति फलितोऽर्थः। तस्मात् गन्धाभावाभाववत्वात् गन्धवत्वात् न तथा इतरभेदाभाववती न किन्तु इतरभेदाभावाभाववती इतरभेदवतीति पर्यवसितोऽर्थः॥

**मू* सन्दिग्ध साध्यवान् पक्षः, यथा, धूमवत्वे हेतौ पर्वतः॥**

पृथिवीमात्रस्य पक्षत्वादित्यत्र निर्दिष्टं पक्षं लक्षयति सन्दिग्धेति॥ संपूर्वकदिह धातोः सन्देहोऽर्थः, क्तप्रत्ययस्य विषयोऽर्थः, तस्य साध्येऽन्वये सन्देहविषयीभूतसाध्याश्रयत्वम् पक्षस्य लक्षणं इति फलितम्। सन्देहः पर्वतो वह्निमान् नवेति सन्देहः, तद्विषयीभूतः यः साध्यः वह्निरूपः साध्यः, तदाश्रयत्वं पर्वतो वह्निमान् धूमात् इत्यत्र पक्षभूतपर्वते वर्तते इति लक्षणसमन्वयः। सन्दिग्धत्वानुपादाने पूर्वोक्तस्थलएव वह्निरूपसाध्याश्रयत्वमादाय सपक्षे महानसदावतिव्याप्तिः। तदुपादाने सपक्षस्य निश्चितसाध्याश्रयत्वेन सन्दिग्धसाध्याश्रयत्वस्याभावात् नातिव्याप्तिः। नचैवमपि पर्वतान्तर्भावेण सन्दिग्धस्य साध्यस्याश्रयत्वमादाय सपक्षेऽतिव्याप्तिः सम्भवतीति वाच्यम्। साध्यप्रकारकसन्देह विशेष्यत्वस्य तदर्थत्वात्, तथाच, महानसान्तर्भावेण साध्यप्रकारकसन्देहाभावेन तादृशसन्देहविशेष्यत्वस्य तत्राभावेन नातिव्याप्तिः। नचैवमपि साध्यतावच्छेदकांशे साध्यस्यापि विशेष्यतया साध्यप्रकारकसंदेहविशेष्यत्वस्य साध्येऽपि सत्वात् अतिव्याप्तिरिति वाच्यम्, साध्यप्रकारकसन्देहनिरूपितमुख्यविशेष्यत्वस्य विवक्षितत्वात्, वह्नेः वह्नित्वांशे विशेष्यत्वेऽपि पर्वतांशे प्रकारत्वेन वह्नित्वनिष्ठप्रकारतानिरूपितवह्निनिष्ठविशेष्यतायाः पर्वतनिष्ठविशेष्यतानिरूपितप्रकारतासमानाधिकरणतया (प्रकारत्वावच्छिन्नतया) मुख्यविशेष्यतात्वाभावेनातिव्याप्त्यभावात्। विशेष्यतायां मुख्यत्वञ्च प्रकारत्वासमानाधिकरणत्वं प्रकारत्वानवच्छिन्नत्वं वा बोध्यम्। नच पर्वतो वह्निमान् नवा भूतलं घटवत् नवा इति समूहालम्बनरूपं साध्यप्रकारकसंशयमादाय तन्निरूपितमुख्यविशेष्यतामादाय भूतलादावतिव्याप्तिरिति वाच्यम्, साध्यनिष्ठप्रकारतानिरूपिता (साध्याभावनिष्ठप्रकारतानिरूपिता) या संशयीया मुख्यविशेष्यता तदाश्रयत्वस्य लक्षणत्वात्, समूहालम्बनज्ञाननिरूपितभूतलनिष्ठविशेष्यतायाः साध्यप्रकारकसंशयनिरूपितत्वेऽपि भूतले साध्यतदभावयोरप्रकारत्वात् तत्तन्निष्ठप्रकारतानिरूपितविशेष्यतायाः भूतलेऽसत्वेनातिव्याप्त्यभावात्॥ इदञ्च लक्षणं साध्यसंशयस्य पक्षतात्वमङ्गीकुर्वतां प्राचांमते बोध्यम्। नवीनमते तु संशयविरहदशायामपि घनगर्जितेन मेघानुमानेन सिषाधयिषाकालिकसिद्धिदशायां अनुमित्युत्पत्त्या

च इदं लक्षणं विहाय सिषाधयिषाविरहविशिष्टसिद्ध्यभाववत्त्वं पक्षलक्षणं बोध्यम्। केषांचिन्मते अनुमित्युद्देश्यत्वमेव पक्षत्वं बोध्यम् ॥

**मू* निश्चितसाध्यवान् सपक्षः। यथा, अत्रैव महानसः ॥**

सपक्षं लक्षयति निश्चितेति ॥ निश्चिनोतेः निश्चयोऽर्थः, क्तप्रत्ययस्य विषयोऽर्थः, तथाच, निश्चयविषयसाध्याश्रयत्वं सपक्षस्य लक्षणम्। निश्चयः महानसो वह्निमान् इति निश्चयः, तद्विषयीभूतः यः साध्यः वह्निरूपः साध्यः, तदाश्रयत्वं महानसे वर्तते इति समन्वयः। निश्चितपदाभावे संदिग्धसाध्याश्रयत्वमादाय पक्षेऽतिव्याप्तिः। तन्निवेशे पक्षे साध्यनिश्चयाभावेन निश्चितसाध्याश्रयत्वस्य तत्राभावात् नातिव्याप्तिः। नचैवमपि महानसान्तर्भावेण निश्चयविषयस्य साध्यस्य आश्रयत्वमादाय पक्षेऽतिव्याप्तिरिति वाच्यम्, साध्यप्रकारकनिश्चयविशेष्यत्वस्य निवेशनीयत्वात्, पक्षान्तर्भाविण साध्यप्रकारकनिश्चयाभावेन साध्यप्रकारकनिश्चयविशेष्यत्वस्य पक्षेऽभावात् नातिव्याप्तिः। अत्रापि पूर्ववत् वह्न्यादावतिव्याप्तिवारणाय महानसो वह्निमान् घटवत् भूतलं इति समूहालम्बनात्मकनिश्चयमादाय भूतलादावतिव्याप्ति वारणाय च साध्यनिष्ठप्रकारतानिरूपितनिश्चयीयमुख्यविशेष्यताश्रयत्वपर्यन्तस्य लक्षणस्य आवश्यकता अस्त्येव ॥

**मू* निश्चितसाध्याभाववान् विपक्षः। यथा, अत्रैव महाह्रदः ॥**



विपक्षलक्षणमाह निश्चितेति ॥ निश्चयविषयीभूतसाध्याभावाश्रयत्वं विपक्षस्य लक्षणम्। पर्वतो वह्निमान् धूमात् इत्यत्र महाह्रदरूपविपक्षे लक्षणसमन्वयः, तथाहि, निश्चयः ह्रदो वह्न्यभाववान् इतिनिश्चयः, तद्विषयीभूतो यः साध्याभावः वह्न्यभावः, तदाश्रयत्वं ह्रदेऽस्तीति लक्षणसमन्वयः। निश्चितपदाभावे ह्रदो वह्निमान् धूमात् इत्यत्र ह्रदरूपपक्षेपि साध्याभावाश्रयत्वस्य सत्वात् अतिव्याप्तिः। तन्निवेशे तु अनुमितिकाले साध्याभावसंशयस्यैव सत्वेन तन्निश्चयाभावेन निश्चितसाध्याभावाश्रयत्वस्य असत्वात् नातिव्याप्तिः। नचैवमपि ह्रदो वह्निमान् इत्यनुमितिकाले पक्षभूतह्रदेऽपि घटाद्यन्तर्भावेण निश्चयविषयवह्न्यभावरूपसाध्याभावाश्रयत्वस्य विद्यमानत्वात् अतिव्याप्तिरिति वाच्यम्, साध्याभावप्रकारकनिश्चयविशेष्यत्वस्य विवक्षणीयत्वात्, अनुमितिकाले ह्रदे पक्षे साध्याभावनिश्चयभावेन साध्याभावप्रकारकनिश्चयविशेष्यत्वस्य तदा ह्रदे अभावेन नातिव्याप्तिः। अत्रापि पूर्ववत् साध्यादावतिव्याप्तिवारणाय मुख्यविशेष्यत्वम् गुणो वह्न्यभाववान् ह्रदो जलवान् इति समूहालम्बननिश्चयमादाय पक्षीभूतह्रदेऽतिप्रसङ्गवारणाय साध्याभावत्वावच्छिन्नप्रकारतानिरूपितनिश्चयीयमुख्यविशेष्यताश्रयत्वपर्यन्तं लक्षणं परिष्करणीयमेव। तथा परिष्कारे ह्रदांशे वह्न्यभावस्याप्रकारत्वेन साध्याभावनिष्ठप्रकारतानिरूपितनिश्चयीयमुख्यविशेष्यताश्रयत्वस्य पक्षभूतह्रदेऽभावात् नातिव्याप्तिः ॥

**एवं सद्धेतवो निरूपिताः ॥**

(व्याप्तिपक्षधर्मताविशिष्टत्वं सद्धेतूनां लक्षणम् । व्याप्तिपक्षधर्मत्वोभयाभाववत्त्वं असद्धेतूनां लक्षणम् । व्याप्त्यभाववत्त्वमात्रोक्तौ ह्रदो वह्निमान् धूमात् इत्यत्र बाधितहेतौ व्याप्त्यभाववत्त्वस्याभावात् अव्याप्तिः । पक्षधर्मत्वाभाववत्त्वमात्रोक्तौ पर्वतो धूमवान् वह्नेः इत्यत्र व्यभिचारिहेतौ पक्षधर्मत्वाभाववत्त्वस्याभावात् अव्याप्तिः । तदुभयाभाववत्त्वविवक्षणे तु बाधितव्यभिचारिणोरपि एकसत्त्वे द्वयं नास्तीति, प्रतीत्या उभयाभाववत्त्वस्याक्षतत्वेन न कुत्राप्यव्याप्तिप्रसक्तिः । व्याप्तिपक्षधर्मत्वान्यतराभाववत्त्वोक्तौ बाधितव्यभिचारिणोः तदन्यतरस्य सद्भावात् अव्याप्तिरित्युभयाभावपर्यन्तानुसरणम् । एवम् व्याप्तिविशिष्टपक्षधर्मत्वाभावरूपविशिष्टाभावस्यापि असद्धेतुलक्षणत्वमुपपद्यत एव, ह्रदो वह्निमान् धूमात् इत्यादिबाधितहेतौ पक्षधर्मत्वरूपविशेष्याभावप्रयुक्तः विशिष्टाभावः सम्भवति, पर्वतो धूमवान् वह्नेः इत्यत्र व्याप्तिरूपविशेषणाभावप्रयुक्तः विशिष्टाभावश्च सम्भवतीति न काचिदपि अनुपपत्तिः । नच उत्पत्तिकालावच्छिन्नघटो गन्धवान् पृथिवीत्वात् इत्यत्र पृथिवीत्वरूपबाधितहेतौ व्याप्तिपक्षधर्मतयोरुभयोरपि सद्भावेन व्याप्तिपक्षधर्मत्वोभयाभावरूपलक्षणस्य व्याप्तिविशिष्टपक्षधर्मत्वाभावरूपलक्षणस्य च तत्राभावेन अव्याप्तिरिति वाच्यम्, अत्र लक्षणद्वये पक्षधर्मतायाः साध्याश्रयपक्षवृत्तित्वरूपत्वेन विवक्षणीयतया लक्षणद्वयेऽप्यव्याप्तिप्रसक्त्यभावात् ॥ नच तर्हि व्याप्तिपक्षधर्मताविशिष्टत्वरूपसद्धेतुलक्षणस्य उत्पत्तिकालावच्छिन्नघटो गन्धवान् पृथिवीत्वात् इत्यत्र पृथिवीत्वरूपहेतावतिव्याप्तिरिति वाच्यम् तत्रापि पक्षधर्मतायाः साध्याश्रयपक्षवृत्तित्वरूपत्वेन परिष्करणीयता तादृशपक्षधर्मतायाः प्रकृतपृथिवीत्वहेतावभावाच्च नातिप्रसङ्गः ॥ अथवा, सव्यभिचाराद्यन्यतमत्वमसद्धेतुत्वम् । तदभाववत्त्वं सद्धेतुत्वम्, एवञ्च उत्पत्तिकालावच्छिन्नघटो गन्धवान् पृथिवीत्वात् इत्यत्र पृथिवीत्वरूपहेतोः सव्यभिचाराद्यन्यतमान्तर्गतत्वेन (बाधितत्वेन) असद्धेतुत्वमेव, इति न कापि अनुपपत्तिः) ॥



सन्तमर्थं बुबोधयिषुणा केनचित् पुंसा पर्वतादौ वह्न्यादि साधके धूमादिरूपसद्धेतौ प्रयुक्ते सति पञ्चम्यन्तत्वादिना सद्धेतुत्वभ्रमजनके ह्रदो वह्निमान् धूमात् इत्याद्यसद्धेतौ प्रतिपक्षिणा परवञ्चनाय प्रयुक्ते सति तस्मिन् प्रतिपक्षिहेतौ दोषोद्भावनाय दुष्टहेतवो निरूप्यन्ते ॥

**मू॰ सव्यभिचारविरुद्धसत्प्रतिपक्षाऽसिद्ध-**
**बाधिताः पञ्च हेत्वाभासाः ॥**

हेतुवदाभासन्त इति हेत्वाभासाः, वत्पदस्य सादृश्यं आङ्पूर्वकभासधातोः आभासश्चार्थः, आभासो नाम भ्रमः, आख्यातस्य विषयत्वमर्थः, हेतोः सादृश्ये आधेयत्वसम्बन्धेन सादृश्यस्य च आभासे प्रकारतानिरूपकत्वसम्बन्धेन च अन्वयः, हेतुपदं सद्धेतुपरं, (सादृश्यञ्च व्याप्तिपक्षधर्मताविशिष्टत्वरूपं ग्राह्यं) तथाच, सद्धेतुनिष्ठसादृश्यप्रकारकभ्रमविषयाः पञ्च हेतवः इत्यर्थः । इमे एव दुष्टहेतवः इत्युच्यन्ते । दुष्टत्वञ्च दोषविशिष्टत्वम् । दोषाश्च व्यभिचारविरोधसत्प्रतिपक्षाऽसिद्धिबाधाः ॥

दोषलक्षणन्तु, अनुमितितत्करणान्यतरप्रतिबन्धकयथार्थज्ञानविषयत्वम् । तद्वत्ताबुद्धिं प्रति तदभाववत्तानिश्चयस्य तदभावव्याप्यवत्ता-

निश्चयस्य च प्रतिबन्धकत्वं वर्तते, तथाच ह्रदो वह्निमान् धूमात् इत्यत्र वह्न्यभाववद्ध्रदरूपबाधे लक्षणसमन्वयः तथाहि, अनुमितिः, ह्रदो वह्निमान् इत्यनुमितिः, तत्प्रतिबन्धकं यत् यथार्थं ज्ञानं ह्रदोवह्न्यभाववान् इति निश्चयरूपं ज्ञानं, तद्विषयत्वं वह्न्यभाववद्ध्रदे वर्तते इति ॥ अस्मिन्नेव स्थले वह्न्यभावव्याप्यवद्ध्रदरूपसत्प्रतिपक्षेऽपि लक्षणसमन्वयः कार्यः, तथाहि, अनुमितिस्तु निरुक्तैव, प्रतिबन्धकज्ञानन्तु वह्न्यभावव्याप्यवान् ह्रदः इति निश्चयरूपं ग्राह्यम् ॥ अनुमितिप्रतिबन्धकज्ञानविषयत्वमात्रोक्तौ पर्वतो वह्निमान् प्रमेयत्वात् इत्यत्र वह्न्यभाववद्वृत्तिप्रमेयत्वरूपव्यभिचारेऽव्याप्तिः, तत्र वह्न्यभाववद्वृत्तिप्रमेयत्वं इति निश्चयस्य वह्न्यभाववदवृत्ति प्रमेयत्वं इति व्याप्तिज्ञानं प्रत्येव तदभाववत्तानिश्चयमुद्रया प्रतिबन्धकत्वेन अनुमितिप्रतिबन्धकत्वाभावात्, अतः करणपदम्, एतन्निश्चयस्य अनुमितिप्रतिबन्धकत्वाभावेऽपि करणीभूतव्याप्तिज्ञानप्रतिबन्धकत्वात् व्यभिचारेऽपि लक्षणसमन्वयः। तत्करणप्रतिबन्धकज्ञानविषयत्वमात्रोक्तौ बाधस्यानुमितिप्रतिबन्धकत्वेन तत्करणप्रतिबन्धकज्ञानविषयत्वाभावात् अव्याप्तिः, अतः अनुमितितत्करणान्यतरप्रतिबन्धकत्वस्य लक्षणे निवेशः। तन्निवेशे तु बाधनिश्चियस्यानुमिति प्रतिबन्धकत्वेन तदन्यतरप्रतिबन्धकत्वस्य सत्वात् समन्वयः ॥

एषाञ्च दोषाणां स्वज्ञानविषयप्रकृतहेतुतावच्छेदकधर्मवत्वसंबन्धेन हेतौ सत्वात् हेतूनां दुष्टत्वव्यवहारः ह्रदो वह्निमान् धूमात् इत्यत्र वह्न्यभाववद्ध्रदरूपबाधस्य अनेन सम्बन्धेन धूमरूपहेतौ सत्वात् धूमस्य दुष्टत्वं सम्भवति, तथाहि, स्वं वह्न्यभाववद्ध्रदः, तद्विषयकं यत् ज्ञानं



वह्न्यभाववान् ह्रदः धूमश्च इति समूहालम्बनात्मकं ज्ञानं, तद्विषयभूतं प्रकृतहेतुतावच्छेदकं धूमत्वम्, तद्वत्वसम्बन्धेन वह्न्यभाववद्ध्रदः धूमे वर्तते इति ॥

**मू॰ सव्यभिचारोऽनैकान्तिकः। स त्रिविधः, साधारणासाधारणानुपसंहारिभेदात्। तत्र साध्याभाव-वद्वृत्तिः साधारणः। यथा, पर्वतोवह्निमान् प्रमेयत्वात्, अत्र प्रमेयत्वस्य वह्न्यभाववति ह्रदे विद्यमानत्वात् ॥**

सव्यभिचारं विभजते स त्रिविध इति। साधारणाद्यन्यतमत्वं सव्यभिचारसामान्यलक्षणम्। साधारणं लक्षयति साध्याभाववदिति। साध्यनिष्ठप्रतियोगिताकाभाववन्निरूपितवृत्तित्वं साधारणहेतोः लक्षणं फलितम्। पर्वतो वह्निमान् प्रमेयत्वात् इत्यत्र प्रमेयत्वरूपसाधारणहेतौ लक्षणसमन्वयः (अत्र पर्वतः पक्षः, वह्निः साध्यः, प्रमेयत्वं हेतुः) तथाहि, साध्यः वह्निः, तन्निष्ठा या प्रतियोगिता वह्निः नास्तीत्याकारकप्रतीतिसिद्धाभावीया वह्नित्वावच्छिन्ना प्रतियोगिता, तन्निरूपको योऽभावः वह्न्यभावः, तदधिकरणं ह्रदः, तन्निरूपितवृत्तित्वं प्रमेयत्वे वर्तते इति। पर्वतो वह्निमान् धूमात् इत्यत्र धूमरूपसद्धेतौ नातिव्याप्तिः, तत्र साध्याभावः वह्न्यभावः, तदधिकरणं ह्रदादिः, तन्निरूपितवृत्तित्वस्य धूमेऽविद्यमानत्वात्। अत्र साध्यनिष्ठप्रतियोगितायां साध्यतावच्छेदकसम्बन्धा-

साध्याभाववद्वृत्तिः साधारणइत्यत्र ॥ साध्यस्याभावः साध्याभावः, सोऽत्रास्तीति साध्याभाववान्, साध्याभाववति वृत्तिः यस्मिन् सः

वच्छिन्नत्वविशेषणं देयम्, अन्यथा, पर्वतो वह्निमान् धूमात् इत्यत्र धूमरूपसद्धेतावतिव्याप्तिः, साध्यनिष्ठा या प्रतियोगिता समवायसम्बन्धावच्छिन्ना वह्नित्वावच्छिन्ना प्रतियोगिता, तन्निरूपको योऽभावः समवायसम्बन्धेन वह्निर्नास्तीतिप्रतीतिसिद्धाभावः, तदधिकरणं पर्वतः तत्र संयोगेन वह्नेः सत्वेऽपि समवायेनाभावात्, तन्निरूपितवृत्तित्वस्य धूमे सत्वात् । साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वनिवेशे तु साध्यतावच्छेदक संयोगसम्बन्धावच्छिन्नवह्नित्वावच्छिन्नप्रतियोगिताकाभावः संयोगेन वह्न्यभावएव, नतु समवायेन वह्न्यभावः, एतदीयप्रतियोगितायाः साध्यतावच्छेदकसंयोगसम्बन्धानवच्छिन्नत्वात्, संयोगेन वह्न्यभावाधिकरणन्तु न पर्वतः, किन्तु ह्रदादिः, तन्निरूपितवृत्तित्वस्य तत्राभावात् नातिव्याप्तिः ॥ साध्यनिष्ठप्रतियोगितायां साध्यतावच्छेदकधर्मावच्छिन्नत्वविशेषणं देयम्, अन्यथा, पर्वतो वह्निमान् धूमात् इत्यत्र धूमरूपहेतौ अतिव्याप्तिः, साध्यतावच्छेदकसम्बन्धावच्छिन्ना साध्यनिष्ठा या प्रति-

---

साध्याभाववद्वृत्तिः, तस्य भावः साध्याभाववद्वृत्तित्वं, साध्यस्येत्यत्र षष्ठ्याः प्रतियोगितानिरूपकत्वमर्थः, साध्यस्य प्रतियोगितायां आधेयत्वसम्बन्धेनान्वयः, साध्याभाववतीत्यत्र सप्तम्याः निरूपितत्वं अर्थः, वृत्तिः वृत्तित्वं, यस्मिन् सः इत्यत्र सप्तम्याः अधेयत्वमर्थः, अस्य च साध्याभाववद्वृत्तित्वेऽन्वयः, तथाच विग्रहवाक्यात् यादृशबोधो जायते समासवाक्यात् तद्विपरीतबोधो जायते इति नियमानुसारेण विग्रहवाक्यात् यद्वृत्ति साध्यनिष्ठप्रतियोगिताकाभाववद्वृत्तित्वं इति बोधो जायते, समासवाक्यात्तु



योगितेत्युक्तौ संयोगेन वह्निघटत्वोभयं नास्तीतिप्रतीतिसिद्धाभावीया वह्निघटत्वोभयत्वावच्छिन्ना प्रतियोगिता गृह्यते, तन्निरूपकाभावः वह्निघटत्वोभयाभावः एकसत्वे द्वयं नास्तीति प्रतीत्या तदधिकरणं पर्वतः, तन्निरूपितवृत्तित्वं धूमे वर्तते इति । साध्यतावच्छेदकावच्छिन्नत्वनिवेशे तु साध्यतावच्छेदकावच्छिन्नत्वस्य साध्यतावच्छेदकातिरिक्तधर्मानवच्छिन्नत्वरूपतया वह्निघटत्वोभयाभावीयप्रतियोगितायाः साध्यतावच्छेदकातिरिक्तोभयत्वरूपधर्मावच्छिन्नतया तदवच्छिन्नप्रतियोगिताकवह्निसामान्याभावाश्रयत्वस्य पर्वतेऽभावाच्च नातिव्याप्तिः ॥ साध्याभावाधिकरणनिरूपितवृत्तितायां हेतुतावच्छेदकसम्बन्धावच्छिन्नत्वविशेषणं देयम्, अन्यथा, वह्निमान् धूमात् इत्यत्र धूमरूपहेतावतिव्याप्तिः, तत्र संयोगेनवह्न्यभावाधिकरणधूमावयवनिरूपितसमवायसम्बन्धावच्छिन्नवृत्तित्वस्य धूमे सत्वात् । हेतुतावच्छेदकसम्बन्धावच्छिन्नत्वनिवेशे तु धूमावयवनिरूपितसमवायसम्बन्धावच्छिन्नवृत्तितायाः हेतुतावच्छेदकसंयोगसम्बन्धानवच्छिन्नत्वेन न तां वृत्तितामादाय तत्रातिव्याप्तिः ॥

---

भावाधिकरणनिरूपितवृत्तिताविशिष्टः इति बोधो भवति, तत्र भावार्थकत्वप्रत्ययसंयोजने च तादृशवृत्तिताविशिष्टत्वं इति बोधो भवति, वृत्तिताविशिष्टत्वञ्च प्रकृत्यर्थे प्रकारीभूतधर्मो भावप्रत्ययार्थः, इति नियमेन तादृशवृत्तितारूपमेव, तथाच साध्यनिष्ठप्रतियोगितानिरूपकाऽभावाधिकरणनिरूपितवृत्तित्वं साधारणहेतोः लक्षणमिति फलितम् ॥

अत्र वह्न्यभाववद्वृत्ति प्रमेयत्वं इति व्यभिचारनिश्चयस्य वह्न्यभाववद्वृत्ति प्रमेयत्वं इति अनुमितिकरणीभूतव्याप्तिज्ञानांशे (तदभाववत्तानिश्चयमुद्रया) प्रतिबन्धकत्वात् वह्न्यभाववद्वृत्तिप्रमेयत्वरूपव्यभिचारस्य तादृशनिश्चयविषयत्वेन हेत्वाभासलक्षणसमन्वयः सम्भवतीति बोध्यम् ॥

**मू॰ सर्वसपक्षविपक्षव्यावृत्तो हेतुः असाधारणः । यथा,, शब्दो नित्यः शब्दत्वात्, अत्र शब्दत्वं हि सर्वेभ्यो नित्येभ्योऽनित्येभ्यो व्यावृत्तम्, शब्दमात्रवृत्तिं ॥**

असाधारणं लक्षयति सर्वसपक्षेति ॥ सर्वसपक्षविपक्षेभ्योव्यावृत्तः सर्वसपक्षविपक्षव्यावृत्तः । पञ्चम्याः निरूपितत्वमर्थः, वि आङ् पूर्वकवृत्धातोः व्यावृत्तिरर्थः, साच वृत्तित्वाभावरूपा, क्तप्रत्ययस्याश्रयत्वम् । तथाच सर्वसपक्षनिरूपितवृत्तित्वाभावावत्वे सति सर्वविपक्षनिरूपितवृत्तित्वाभाववत्वं असाधारणहेतोः लक्षणमिति पर्यवसन्नम् । अत्र सपक्षः निश्चितसाध्यवान्, विपक्षः निश्चितसाध्याभाववान् ग्राह्यः । (अत्र शब्दः पक्षः, नित्यत्वं साध्यं. शब्दत्वं हेतुः) अत्र शब्दस्य पक्षत्वेन साध्यसंशयसद्भावात् निश्चितसाध्यवत् गगनादि, तदवृत्तित्वं शब्दे वर्तते, तदवृत्तित्वं शब्दत्वे वर्तते, निश्चितसाध्याभाववत् घटादि, तद्वृत्तित्वं घटत्वादौ, तदवृत्तित्वञ्च शब्दत्वे वर्तते इति शब्दो नित्यः शब्दत्वात् इत्यत्र शब्दत्वरूपहेतौ लक्षणसमन्वयः । सर्वसपक्षव्यावृत्तत्वमात्रोक्तौ शब्दो नित्यः कार्यत्वात् इत्यत्र कार्यत्वरूपविरुद्धहेतौ सपक्षभूतगगनादिनिरूपित-



वृत्तित्वाभावस्य सत्वात् अतिव्याप्तिः, विपक्षव्यावृत्तत्वनिवेशे तु घटादिरूपविपक्षव्यावृत्तत्वस्य कार्यत्वेऽभावात् नातिव्याप्तिः । सर्वविपक्षव्यावृत्तत्वमात्रोक्तौ पर्वतो वह्निमान् धूमात् इत्यत्र धूमरूपसद्धेतौ विपक्षभूतह्रदादिनिरूपित वृत्तित्वाभावस्य सत्वात् अतिव्याप्तिः, सपक्षव्यावृत्तत्व निवेशे तु सपक्षभूतमहानसादिव्यावृत्तत्वस्य तत्राभावात् नातिव्याप्तिः । सपक्षे सर्वत्वानिवेशे पर्वतो वह्निमान् धूमात् इत्यत्र धूमरूपसद्धेतौ अयोगोलकरूपयत्किञ्चित्सपक्षव्यावृत्तत्वस्य ह्रदादिसर्वविपक्षव्यावृत्तत्वस्य च सत्वात् अतिव्याप्तिः, सपक्षे सर्वत्वनिवेशे तु सर्वसपक्षान्तर्गतमहानसादिव्यावृत्तत्वस्य धूमेऽभावात् नातिव्याप्तिः । विपक्षे सर्वत्वानिवेशे पर्वतो वह्निमान् जलात् इत्यत्र महानसादिसर्वसपक्षव्यावृत्तत्वस्य गुणादियत्किञ्चिद्विपक्षव्यावृत्तत्वस्य च जलरूपविरुद्धहेतौ सत्वात् अतिव्याप्तिः, विपक्षे सर्वत्वनिवेशे तु सर्वविपक्षान्तर्गतह्रदादिव्यावृत्तत्वस्य जलेऽभावात् नातिव्याप्तिः ॥ अत्र घटः शब्दवान् घटत्वात् इत्यत्र गगनरूपे सपक्षे (अनेकत्वरूपस्य) (यावत्त्वरूपस्य) सर्वत्वस्य अप्रसिद्ध्या घटः शब्दाभाववान् घटत्वात् इत्यत्र विपक्षभूतगगने (निरुक्तस्य) सर्वत्वस्य च अप्रसिद्ध्या अव्याप्तिवारणाय उभयत्रापि सर्वपदस्य सपक्षनिरूपितवृत्तित्वसामान्याभाव विपक्षनिरूपितवृत्तित्वसामान्यभावरूपसामान्याभावस्फोरकत्वमेवेत्यङ्गीकार्यम् ॥ एतेन सर्वसपक्षवृत्तित्वघटत्वोभयाभावादिकमादाय पर्वतो वह्निमान् धूमात् इत्यत्र धूमरूपहेतौ सर्वविपक्षवृत्तित्वघटत्वोभयाभावादिकमादाय शब्दो नित्यः कार्यत्वात् इत्यत्र कार्यत्वरूपहेतौ च अतिव्याप्तिरिति शङ्का निरस्ता ॥ नचैवमपि पर्वतो वह्निमान् धूमात् इत्यत्र

धूमानामधिकरणभेदेन भिन्नतया सपक्षविपक्षावृत्तित्वस्य पर्वतीयधूमे सत्वात् अतिव्याप्तिरिति वाच्यम्, सपक्षनिरूपितवृत्तितानवच्छेदकं विपक्षनिरूपितवृत्तितानवच्छेदकं यद्धेतुतावच्छेदकं तद्वत्वस्य विवक्षणीयत्वात्, पर्वतीयधूमस्य सपक्षमहानसाद्यवृत्तित्वेऽपि हेतुतावच्छेदकीभूतधूमत्वस्य तद्वृत्तितानवच्छेदकत्वाभावात् नातिव्याप्तिः ॥

वस्तुतस्तु, सपक्षावृत्तित्वमात्रमेव (लघु) लक्षणंभवतु विपक्षावृत्तित्वानिवेशे बाधकाभावात्, तदभावे अस्य लक्षणस्य विरुद्धहेतुसाधारण्येऽपि दुष्टसङ्करेऽपि दोषासङ्करः, इति न्यायेन विरोधासाधारण्यदोषयोः परस्परं भिन्नतया दुष्टयोः विरुद्धासाधारणयोः (ऐक्येऽपिः सङ्करेऽपि क्षत्यभावात् । अत एव बहुषु ग्रन्थेषु सपक्षव्यावृत्तोऽसाधारण) इत्येव पाठो दृश्यते ॥ सपक्षविपक्षावृत्तित्वरूपमूलोक्तलक्षणं शब्दोऽनित्यः शब्दत्वात् इत्यत्र सद्धेतावपि साध्यसंशयदशायां असाधारण्यमङ्गीकुर्वतां प्राचीनानां मतमनुसृत्य अभिहितम् । नवीनानां मते अनित्यत्वसाध्यकशब्दत्वहेतोः सद्धेतुतया साध्यवदवृत्तित्वमात्रमेव अतिप्रसङ्गानापादकत्वेन लक्षणतयाऽङ्गीकृतम्, तथाचैतन्मते सपक्षपदं साध्यवन्मात्र बोधकतयाऽङ्गीकृतमिति बोध्यम् ॥ शब्दत्वस्य नित्यानित्यव्यावृत्तत्वे किंवा तदधिकरणं प्रसिद्धं इत्याशङ्कायामाह शब्दमात्रेति ॥

हेतुव्यापकसाध्यसामानाधिकरण्यस्य (साध्याभाववदवृत्तित्वे सति साध्यसामानाधिकरण्यस्य) व्याप्तिरूपतया नित्यत्वासमानाधिकरणं शब्दत्वं इत्यसाधारण्यनिर्णयः नित्यत्वसमानाधिकरणं शब्दत्वमिति



व्याप्तिघटकसामानाधिकरण्यांशे (तदभाववत्तानिश्चयमुद्रया) अनुमितिकरण (व्याप्तिज्ञान) प्रतिबन्धकत्वात् नित्यत्वासमानाधिकरणशब्दत्वरूपासाधारण्यस्य तादृशनिश्चयविषयत्वेन हेत्वाभासत्वमुपपद्यतएव ॥

**मू* अन्वयव्यतिरेकदृष्टान्तरहितोऽनुपसंहारी । यथा सर्वं अनित्यं प्रमेयत्वात् । अत्र सर्वस्याऽपि पक्षत्वात् दृष्टान्तो नास्ति ॥**

अनुपसंहारिणं लक्षयति अन्वयेति ॥ अन्वयव्यतिरेकदृष्टान्ताभ्यां रहितः अन्वयव्यतिरेकदृष्टान्तरहितः, तृतीयायाः प्रतियोगितानिरूपकत्वम्, रहधातोरभावः, क्तप्रत्ययस्याश्रयत्वञ्चार्थः, तथाच अन्वयव्यतिरेकदृष्टान्तप्रतियोगिकाभाववाननुपसंहारीति बोधः । (अत्र सर्वत्वावच्छिन्नं पक्षः, अनित्यत्वं साध्यम्, प्रमेयत्वं हेतुः,) सर्वमनित्यं प्रमेयत्वात् इत्यत्र सर्वस्यापि पक्षतया (पक्षव्यतिरिक्तस्यैवाप्रसिद्धतया) अन्वयदृष्टान्तस्य व्यतिरेकदृष्टान्तस्य च अभावेन अन्वयव्यतिरेकदृष्टान्तरहितत्वस्य अत्र प्रमेयत्वहेतौ सत्वात् लक्षणसमन्वयः । अन्वयदृष्टान्तरहितत्वमात्रोक्तौ पृथिवी इतरभिन्ना गन्धवत्वात् इत्यत्र गन्धरूपकेवलव्यतिरेकिहेतौ अतिव्याप्तिः । व्यतिरेकदृष्टान्तरहितत्वमात्रोक्तौ घटोऽभिधेयः प्रमेयत्वात् इत्यत्र प्रमेयत्वरूपकेवलान्वयिहेतौ अतिव्याप्तिः, अतः दृष्टान्तद्वयरहितत्वनिवेशः कार्यः । नचैवमपि पर्वतो वह्निमान् धूमात् इत्यत्र अन्वयव्यतिरेकदृष्टान्तयोः संयोगसमवायादिसम्बन्धेन धूमेऽभावात् अतिव्याप्तिरिति वाच्यम्, स्वनिरूपितहेतुतावच्छेदकसम्बन्धावच्छिन्नवृत्तित्वसम्बन्धाव-

च्छिन्ना या अन्वयदृष्टान्तनिष्ठा प्रतियोगिता तन्निरूपकाभाववत्वे सति स्ववृत्त्यत्यन्ताभावप्रतियोगित्वसम्बन्धावच्छिन्ना या व्यतिरेकदृष्टान्तनिष्ठा प्रतियोगिता तन्निरूपकाभाववत्त्वस्य लक्षणतया विवक्षणीयतया वह्निमान् धूमात् इत्यत्र धूमे निरुक्तसम्बन्धाभ्यां अन्वयव्यतिरेकदृष्टान्तयोः सत्वेन तत्र अतिव्याप्त्यनवकाशात् (समानकालिकत्वसम्बन्धावच्छिन्नत्वेन वा अन्वयव्याप्तिरेकदृष्टान्तनिष्ठा प्रतियोगिता विवक्षणीया, अतो न क्वाप्यतिप्रसङ्गः) (नचैवं साधारणासाधारणयोरपि अन्वयव्यतिरेकव्याप्त्योरभावेन अन्वयव्यतिरेकदृष्टान्तरहितत्वस्य सत्वात् तयो रतिव्याप्तिरिति वाच्यम्, पक्षभिन्नत्वे सति साध्यसाधनोभयाश्रयत्वस्य अन्वयदृष्टान्तलक्षणत्वेन पक्षभिन्नत्वे सति साध्याभावहेत्वभावाश्रयत्वस्य व्यतिरेकदृष्टान्तलक्षणत्वेन च अत्र विवक्षितत्वेन अन्वयव्यतिरेकव्याप्त्योः अत्र अप्रविष्टत्वेन साधारणासाधारणस्थलयोः अन्वयव्यतिरेकदृष्टान्तयोः अन्यतरस्य सत्वेन अन्वयदृष्टान्तरहितत्वे सति व्यतिरेकदृष्टान्तरहितत्वस्याभावेन अन्वयव्यतिरेकव्याप्त्यभावेऽपि क्षत्यभावात्) अन्वयव्यतिरेकदृष्टान्तरहितत्वमुपपादयति, अत्र सर्वस्यापीति ॥

तथाच अन्वयव्यतिरेकदृष्टान्तरहितत्वविशिष्टोऽयं हेतुः इत्यनुपसंहारित्वनिश्चयः अन्वयव्यतिरेकदृष्टान्तसहितोऽयं हेतुः इति ज्ञानं प्रतिबध्नाति, एतदभावे च अन्वयव्यतिरेकव्याप्तिमान् अयं इति निश्चयः न सम्भवति, एतदभावे परामर्शो न सम्भवतीति परामर्शरूपानुमितिकरणसामग्रीविघटकतया अनुपसंहारित्वस्य हेत्वाभासत्वं, नतु साक्षात् अनुमितितत्करणान्यतरप्रतिबन्धकज्ञानविषयत्वमिति ध्येयम् ॥



मू॰ साध्याभावव्याप्तो हेतुः विरुद्धः। यथा, शब्दो नित्यः कार्यत्वात्, अत्र कार्यत्वं नित्यत्वाभावेनानित्यत्वेन व्याप्तम् ॥

विरुद्धं लक्षयति साध्याभावेति ॥ साध्याभावेन व्याप्तः साध्याभावव्याप्तः, तृतीयायाः निरूपितत्वं अर्थः, अस्य च व्याप्तपदार्थैकदेशव्याप्तावन्वयः, तादृशव्याप्तिविशिष्टरूपस्य व्याप्तपदार्थस्य निपातातिरिक्तनामार्थयोः, इति न्यायेन विरुद्धपदार्थेऽभेदसम्बन्धेनान्वयः तथाच, साध्याभावनिरूपितव्याप्तिविशिष्टाभिन्नो विरुद्धः इति बोधः। अत्र व्याप्तिपदेन व्यतिरेकव्याप्तिः ग्राह्या, साच तदभावव्यापकीभूताभावप्रतियोगित्वरूपा, तदेकदेशीभूताभावे तच्छब्दार्थसाध्याभावस्य योजने च साध्याभावाभावव्यापकीभूताभावप्रतियोगीति लभ्यते, व्यापकत्वस्य तदधिकरणवृत्त्यत्यन्ताभावाप्रतियोगित्वरूपत्वेन साध्याभावाभावस्य साध्यरूपतया च साध्याधिकरणवृत्त्यन्ताभावाप्रतियोग्यभावप्रतियोगित्वं विरुद्धहेतोः लक्षणमिति पर्यवसन्नम्। शब्दो नित्यः कार्यत्वात् इत्यत्र (अत्र शब्दः पक्षः, नित्यत्वं साध्यम्, कार्यत्वं हेतुः) कार्यत्वहेतौ लक्षणसमन्वयः, तथाहि अत्र साध्यं नित्यत्वम्, तदधिकरणं गगनादिकं, तद्वृत्तिः योऽत्यन्ताभावः नहि कार्यत्वाभावाभावः परन्तु कार्यत्वाभावः तत्प्रतियोगि कार्यत्वं, अप्रतियोगी योऽभावः कार्यत्वाभावः, तत्प्रतियोगित्वं कार्यत्वे वर्तते इति। अत्र च साध्यव्यापकत्वं विहाय साध्यसामानाधिकरण्यस्य अत्यन्ताभावे निवेशे पर्वतो वह्निमान् धूमात् इत्यत्र धूमरूपहेतावतिव्याप्तिः, तथाहि, साध्यः वह्निः, तदधिकरणं

अयोगोलकं, तद्वृत्तिः योऽत्यन्ताभावः धूमाभावः, तत्प्रतियोगित्वं धूमे वर्तते इति। व्यापकत्वानिवेशे तु साध्यव्यापकत्वं धूमाभावे न सम्भवति, कुतः, धूमाभावस्य साध्याधिकरणमहानसादिवृत्ति धूमाभावाभावप्रतियोगित्वात्, अतो न तत्रातिव्याप्तिः। नचैवं शब्दो नित्यः शब्दत्वात् इत्यत्र शब्दत्वरूपासाधारणहेतोः नित्यत्वात्मकसाध्यव्यापकीभूतस्य शब्दत्वाभावस्य प्रतियोगित्वेन न तत्रातिव्याप्तिरिति वाच्यम्, दुष्टसङ्करेपि दोषासङ्करः इति न्यायेन दोषयोरसाधारण्यविरोधयोः भिन्नतया दुष्टयोस्सङ्करेऽपि बाधकाभावात्। अतएव निश्चितसाध्यवद्व्यावृत्तत्वरूपस्य असाधारणलक्षणस्य विरुद्धसाधारण्येऽपि न क्षतिः॥

अत्र च कार्यत्ववान् शब्दः इति निश्चयविशिष्टस्य नित्यत्वव्यापकीभूताभावप्रतियोगि कार्यत्वं इति निश्चयस्य निश्चयविशिष्टनिश्चयत्वेन (तदभावव्याप्यवत्तानिश्चयमुद्रया) शब्दो नित्यः इत्याकारकानुमितिं प्रति प्रतिबन्धकत्वात् तादृशनिश्चयविषयीभूते नित्यत्वव्यापकीभूताभावप्रतियोगिकार्यत्वरूपविरोधे हेत्वाभासत्वोपपत्तिः॥

**मू॰ यस्य साध्याभावसाधकं हेत्वन्तरं विद्यते सः सत्प्रतिपक्षः। यथा, शब्दो नित्यः श्रावणत्वात्, शब्दोऽनित्यः कार्यत्वात् घटवत्॥**

सत्प्रतिपक्षं लक्षयति यस्येति॥ केनचित् भ्रान्तेन पुंसा शब्दे नित्यत्वसाधनाय शब्दो नित्यः श्रावणत्वात् इति श्रावणत्वहेतौ प्रयुक्ते सति अभ्रान्तोऽन्यः श्रावणत्वहेतुः शब्दे नित्यत्वं साधयतुं न



शक्नोतीति मन्वानः प्रतिपक्षिप्रयुक्तश्रावणत्वरूपहेतौ दोषोद्भावनाय शब्दे नित्यत्वाभावसाधकं कार्यत्वरूपं हेत्वन्तरं प्रयुङ्क्ते; तत्र प्रथमः श्रावणत्वरूपहेतुः सत्प्रतिपक्षः इति व्यवह्रियते। (प्रथमानुमाने पक्षः शब्दः, नित्यत्वं साध्यं, श्रावणत्वं हेतुः। द्वितीयानुमाने शब्दः पक्षः, अनित्यत्वं साध्यम्, कार्यत्वं हेतुः) वाक्यार्थस्तु, यस्य श्रावणत्वरूपहेतोः यत् नित्यत्वं साध्यत्वेनाभिमतं, तदभावः नित्यत्वाभावः, तत्साधकं हेत्वन्तरं कार्यत्वरूपहेतुः विद्यते सः श्रावणत्वरूपहेतुः सत्प्रतिपक्षः इति। (यत्तदोः नित्यसम्बन्धः इति न्यायेन यत्तच्छब्दार्थयोरेकार्थबोधकत्वेन तच्छब्देन यत्पदग्राह्यश्रावणत्वरूपहेतुरेव ग्राह्यः) तथाच, साध्याभावव्याप्यमतिहेतुमत्पक्षः सत्प्रतिपक्षः इति फलितम्॥

अनित्यत्वव्याप्यकार्यत्ववान् शब्दः इति निश्चयस्य शब्दो नित्यः इत्यनुमितिं प्रति तदभावव्याप्यवत्तानिश्चयमुद्रया प्रतिबन्धकत्वेन साध्याभावव्याप्यवत्पक्षरूपसत्प्रतिपक्षस्य तादृशनिश्चयविषयत्वेन हेत्वाभासत्वमुपपद्यतएव, अस्य सत्प्रतिपक्षत्वं नवीनमतसिद्धम्॥

प्राचीनास्तु, साध्याभावव्याप्यप्रतिहेतुमत्तापरामर्शकालीनसाध्यव्याप्यप्रकृतहेतुमत्तापरामर्शविषयत्वं सत्प्रतिपक्षः इति वदन्ति। अत्र साध्याभावव्याप्यप्रतिहेतुमत्तापरामर्शः अनित्यत्वव्याप्यकार्यत्ववान् शब्दः इत्याकारकः, तत्कालीनः साध्यव्याप्यप्रकृतहेतुमत्तापरामर्शः नित्यत्वव्याप्यश्रावणत्ववान् शब्दः इत्याकारकः, तद्विषयत्वं श्रावणत्वरूपहेतौ वर्ततइति समन्वयः। अत्र साध्यव्याप्यप्रकृतहेतुमत्तापरामर्शस्य साध्या-

भावानुमितिं प्रति साध्याभावव्याप्यप्रतिहेतुमत्तापरामर्शस्य साध्यानुमितिं प्रति च तदभावव्याप्यवत्तानिश्चयमुद्रया प्रतिबन्धकत्वेन परस्पराभावव्याप्यवत्तानिश्चयात् परस्परानुमितिप्रतिबन्धः फलमिति ज्ञेयम् ॥

मू* असिद्धः त्रिविधः, आश्रयासिद्धः स्वरूपासिद्धः व्याप्यत्वासिद्धश्चेति । आश्रयासिद्धो यथा, गगनारविन्दं सुरभि अरविन्दत्वात् सरोजारविन्दवत् । अत्र गगनारविन्दमाश्रयः, सच नास्त्येव ॥

असिद्धं विभजते असिद्धइति ॥ आश्रयासिद्धाद्यन्यतमत्वं असिद्धसामान्यलक्षणम् । (अत्र गगनारविन्दं पक्षः, सुरभित्वं साध्यम्, अरविन्दत्वं हेतुः) अत्र गगनेऽरविन्दमिति व्युत्पत्त्या सप्तम्या आधेयत्वार्थकत्वे च गगनवृत्तित्वविशिष्टारविन्दस्य पक्षत्वे सिद्धे गगनवृत्तित्वस्य पक्षविशेषणतया (पक्षविशेषण धर्मस्य पक्षतावच्छेदकतया) पक्षतावच्छेदकत्वेन पक्षतावच्छेदकाभाववत्पक्षस्य आश्रयासिद्धितया गगनवृत्तित्वाभाववदरविन्दस्य आश्रयासिद्धित्वं सम्भवति । तथाच, पक्षतावच्छेदकाभाववत्पक्षकत्वं आश्रयासिद्धस्य लक्षणं इति फलितम् । समन्वयस्तु, पक्षतावच्छेदकाभाववत्पक्षः गगनवृत्तित्वाभववदरविन्दं, तत्कत्वं अरविन्दत्वरूपहेतौ वर्तते इति (तादृशपक्षकत्वञ्च तादृशपक्षकालीनत्वम्) ॥

अत्र गगनवृत्तित्वविशिष्टारविन्दं सुरभि इत्यनुमितिं प्रति पक्षतावच्छेदकविशिष्टपक्षांशे प्रतिबन्धकीभूते गगनवृत्तित्वाभाववदरविन्दं इति निश्चये गगनवृत्तित्वाभाववदरविन्दरूपाश्रयासिद्धेः विषयतया तत्र हेत्वाभासलक्षणसमन्वयः सम्भवति ॥



वाक्यार्थस्तु, गगनारविन्दमाश्रयइति । आश्रयः पक्षः, सच नास्त्येवेति, सच पक्षः नास्त्येव अप्रसिद्धएव, अरविन्दे गगनवृत्तित्वस्याप्रसिद्धत्वात् इति ॥

मू* स्वरूपासिद्धो यथा, शब्दो गुणः चाक्षुषत्वात् रूपवत् । अत्र चाक्षुषत्वं शब्दे नास्ति, शब्दस्य श्रावणत्वात् ॥

स्वरूपासिद्धमुदाहरति स्वरूपासिद्धइति ॥ (अत्र शब्दः पक्षः, गुणत्वं साध्यं, चाक्षुषत्वं हेतुः) चाक्षुषत्वं चक्षुरिन्द्रियजन्यप्रत्यक्षविषयत्वं । श्रावणत्वंश्रवणेन्द्रियजन्यप्रत्यक्षविषयत्वं ॥ हेत्वभाववत्पक्षः स्वरूपासिद्धिः । हेत्वभाववत्पक्षकत्वं स्वरूपासिद्धस्य लक्षणम् । हेत्वभाववत्पक्षः चाक्षुषत्वाभाववच्छब्दः, तत्कत्वस्य (तत्कालीनत्वस्य) चाक्षुषत्वहेतौ सत्वात् समन्वयः ॥

अत्र गुणत्वव्याप्यचाक्षुषत्ववान् शब्दः इति परामर्शं प्रति हेतुविशिष्टपक्षांशे चाक्षुषत्वाभाववान् शब्दः इति निश्चयस्य तदभाववत्तानिश्चयमुद्रया प्रतिबन्धकत्वेन तादृशनिश्चयविषयत्वस्य चाक्षुषत्वाभाववच्छब्दरूपासिद्धौ सत्वात् हेत्वाभासत्वं सम्भवत्येव ॥

मू* सोपाधिको व्याप्यत्वासिद्धः । साध्यव्यापकत्वे सति साधनाव्यापकत्वं उपाधित्वम् ।

साध्यसमानाधिकरणात्यन्ताभावाप्रतियोगित्वं साध्यव्यापकत्वम्। साधनवन्निष्ठात्यन्ताभावप्रतियोगित्वं साधनाव्यापकत्वम्। यथा, पर्वतो धूमवान् वह्ने रित्यत्र आर्द्रेन्धनसंयोगः उपाधिः। यत्र धूमः तत्रार्देन्धनसंयोग इति साध्यव्यापकता, यत्र वह्निः तत्रार्द्रेन्धनसंयोगइति नास्ति, अयोगोलके आर्द्रेन्धनसंयोगाभावात्। एवं साध्यव्यापकत्वे सति साधनाव्यापकत्वादार्द्रेन्धनसंयोगः उपाधिः। सोपाधिकत्वात् वह्निमत्वं व्याप्यत्वासिद्धम्॥

व्याप्यत्वासिद्धमुदाहरति सोपाधिक इति॥ उपाधिविशिष्टत्वं व्याप्यत्वासिद्धस्य लक्षणम्, उपाधिवैशिष्टयञ्च स्वाभाववद्वृत्तित्वसम्बन्धेन ग्राह्यम्। यद्वैशिष्ट्यं यत्र भासते सएव स्वपदार्थः, इति न्यायेन हेतौ उपाधिवैशिष्ट्यस्य भाने उपाधेरेव स्वपदग्राह्यतया धूमवान् वह्नेरित्यत्र आर्द्रेन्धनसंयोगरूपोपाधेः स्वपदेन ग्रहणे स्वाभावः आर्द्रेन्धनसंयोगाभावः, तद्वदयोगोलकं, तद्वृत्तित्वस्य वह्नौ सत्वेन तेन सम्बन्धेन उपाधिविशिष्टत्वस्य निरुक्तस्थलीयवह्निरूपहेतौ सत्वात् स हेतुः व्याप्यत्वासिद्धो भवति॥

उपाधेः लक्षणमाह साध्यसमानाधिकरणेति॥ साध्यसमानाधिकरणा (साध्याधिकरणवृत्त्य) त्यन्ताभावाप्रतियोगित्वे सति साधनाधिकरणवृत्त्यत्यन्ताभावप्रतियोगित्वम् उपाधेः लक्षणमिति फलितम्। पर्वतो धूमवान् वह्नेरित्यत्र आर्द्रेन्धनसंयोगरूपोपाधौ लक्षणसमन्वयः



तथाहि, साध्यः धूमः, तदधिकरणं महानसादिः, तद्वृत्तिः योऽत्यन्ताभावः नह्यार्द्रेन्धनसंयोगाभावः किन्तु पटाद्यभावः, तत्प्रतियोगी पटादिः, तदप्रतियोगित्वं आर्द्रेन्धन संयोगे वर्तते। साधनं वह्निः, तदधिकरणं अयोगोलकं, तद्वृत्तिः योऽत्यन्ताभावः आर्द्रेन्धेनसंयोगाभावः, तत्प्रतियोगित्वं आर्देन्धनसंयोगरूपोपाधौ वर्ततइति लक्षणसमन्वयः॥ साध्यव्यापकत्वमात्रोक्तौ पर्वतो वह्निमान् धूमादित्यत्र सद्धेतुस्थलेऽपि वह्निरूपसाध्येऽतिव्याप्तिः, साध्ये साध्यव्यापकत्वस्याक्षतत्वात्। साधनाव्यापकत्वनिवेशे तु वह्नेः साधनीभूतधूमस्यापि व्यापकत्वात् नातिव्याप्तिः॥ साधनाव्यापकत्वमात्रोक्तौ पर्वतो वह्निमान् धूमादित्यत्र घटादेरपि साधनाधिकरणमहानसादिनिष्ठाभावप्रतियोगित्वेन तत्रातिव्याप्तिः। साध्यव्यापकत्वनिवेशे तु साध्याधिकरणमहानसादिनिष्ठात्यन्ताभावप्रतियोगित्वेन साध्यव्यापकत्वाभावात् घटादौ नातिव्याप्तिः॥

नचैवं पर्वतो धूमवान् वह्नेरित्यत्र आर्द्रेन्धनसंयोगस्य धूमाधिकरणवृत्त्यार्द्रेन्धनसंयोगघटत्वोभयाभावप्रतियोगित्वेनाव्याप्तिरिति वाच्यम्। साध्याधिकरणवृत्त्यभावीयप्रतियोगितायां व्यासज्यवृत्तिधर्मानवच्छिन्नत्वस्य निवेशनीयत्वात्, (व्यासज्यवृत्तित्वञ्च एकत्वानवच्छिन्नानुयोगिताकपर्याप्तिप्रतियोगित्वं, तदर्थः, स्वाधिकरणे पर्याप्तिसम्बन्धेन एकत्वावच्छेदेनावर्तमानत्वम्, तथाच, उभयत्वत्रित्वाद्यवच्छेदेन द्वयत्रयादिषु पर्याप्तिसम्बन्धेन वर्तमानाः द्वित्वत्रित्वचतुष्ट्वादयः व्यासज्यवृत्तिधर्माः इति सिद्धम्) तथाच आर्द्रेन्धनसंयोगघटत्वोभयाभावीयायाः प्रतियोगितायाः

अत्र उभयत्वरूपव्यासज्यवृत्तिधर्मावच्छिन्नतया न तां प्रतियोगितामादाय पूर्वोक्तविधयाऽव्याप्तिः ॥

नचैवमपि निरुक्तस्थले आर्द्रेन्धनसंयोगस्य धूमाधिकरण महानसादिनिष्ठस्य तत्क्षणादिवृत्तित्वविशिष्टार्द्रेन्धनसंयोगाभावस्य प्रतियोगित्वेन तत्र पुनरप्यव्याप्तिरिति वाच्यम् । निरुक्त प्रतियोगितायामेव व्यासज्यवृत्तिधर्मानवच्छिन्नत्वस्येव वैशिष्ट्यानवच्छिन्नत्वस्यापि निवेशनीयत्वात्, तन्निवेशे तु तत्क्षणवृत्तित्वविशिष्टार्द्रेन्धनसंयोगत्वावच्छिन्नप्रतियोगितायाः वैशिष्ट्यार्द्रेन्धनसंयोगत्वरूपधर्मद्वयावच्छिन्नतया न तां प्रतियोगितामादाय तत्राव्याप्तिप्रसक्तिः ॥

नचैवमपि पर्वतो वह्निमान् धूमादित्यत्र वह्निरूपसाध्यस्य साधनाधिकरणमहानसादिनिष्ठस्य वह्निघटत्वोभयाभावस्य पूर्वक्षणवृत्तित्वविशिष्टवह्न्यभावस्य च प्रतियोगित्वेन साध्यव्यापकत्वेन च वह्नावतिव्याप्तिरिति वाच्यम्। साधनसमानाधिकरणात्यन्ताभावीयप्रतियोगितायामपि वैशिष्ट्यव्यासज्यवृत्तिधर्मानवच्छिन्नत्वयोः निवेशनीयत्वात्, तन्निवेशे तु तदुभयाभावीयप्रतियोगितायाः व्यासज्यवृत्तिधर्मावच्छिन्नतया विशिष्टाभावीयप्रतियोगितायाः वैशिष्ट्यावच्छिन्नतया च न तत्प्रतियोगिताद्वयमादाय साध्येऽतिव्याप्तिः ॥ साध्याभाववदवृत्तित्वाभाववद्धेतुः व्याप्यत्वासिद्धिः ॥ उपाधेः दूषकतानिरूपणन्तु दीपिकाव्याख्यानावसरे व्यक्तीकरिष्यते ॥

अत्र धूमाभाववदवृत्तित्वाभाववान् वह्निः इति निश्चयस्य धूमाभाववदवृत्तिर्वह्निमान् इति परामर्शं प्रति धूमाभाववदवृत्तिः वह्निः इति



व्याप्तिज्ञानांशे प्रतिबन्धकत्वेन तादृशनिश्चयविषयीभूते धूमाभाववदवृत्तित्वाभाववद्वह्निरूपव्याप्यत्वासिद्धौ हेत्वाभासत्वमुपपद्यतएव ॥

नचैवं साध्याभाववदवृत्तित्वाभावस्य साध्याभाववद्वृत्तित्वरूपतया व्यभिचारस्य व्याप्यत्वासिद्धेश्चाभेदइति वाच्यम्. दोषयोरैक्येऽपि साध्याभाववदवृत्तित्वाभावत्व साध्याभाववद्वृत्तित्वरूपयोः दोषतावच्छेदकयोः भेदस्याक्षतत्वात्, दोषयोः दोषतावच्छेदकयोरप्यैक्यसद्भावएव पार्थक्येन गणनाया अनर्हत्वात् ॥

नचैवमपि साध्यतावच्छेदकाभाववत्साध्यरूपसाध्याप्रसिद्धि हेतुतावच्छेदकाभावरूप हेत्वप्रसिद्धि सिद्धसाधनादिरूपदोषान्तराणामनिरूपणेन ग्रन्थकर्तुः न्यूनतेति वाच्यम्, अन्येषामपि दोषाणां व्याप्यत्वासिद्धावेवान्तर्भावस्य कर्तव्यत्वात् (येषां क्वापि गतिर्नास्ति तेषां वाराणसी गतिरिति न्यायोऽत्रानुसन्धेयः) ।

मू* यस्य साध्याभावः प्रमाणान्तरेण निश्चितः सः बाधितः । यथा, वह्निः अनुष्णः पदार्थत्वात् जलवत्। अत्रानुष्णत्वं साध्यं, तदभावः उष्णत्वं त्वाचप्रत्यक्षेण गृह्यते इति बोध्यम् ॥ वह्नि ०

इत्यनुमानपरिच्छेदः
समाप्तः
श्रीः श्रीः श्रीः

बाधितस्य लक्षणमाह यस्येति ॥ (अत्र वह्नित्वावच्छिन्नं पक्षः, अनुष्णत्वं साध्यं, पदार्थत्वं हेतुः) वाक्यार्थस्तु, यस्य पदार्थत्वरूपहेतोः यत् साध्यं साध्यत्वेनाभिमतमनुष्णत्वं तदभावः अनुष्णत्वाभावः (उष्णत्वं) त्वाचप्रत्यक्षेण त्वाचप्रत्यक्षजनकत्वगिन्द्रियरूपप्रत्यक्षप्रमाणेन गृह्यते सः पदार्थत्वरूपहेतुः बाधितइति ॥ तथाच साध्याभाववत्पक्षो बाधइति फलितम् साध्याभाववत्पक्षकत्वं बाधितस्य लक्षणम् ॥

अत्र च अनुष्णत्वाभाववान् वह्निः इति बाधनिश्चयस्य वह्निः अनुष्णः इति अनुमितिं प्रति तदभाववत्तानिश्चयमुद्रया प्रतिबन्धकत्वेन तादृशनिश्चयविषयभूतेऽनुष्णत्वाभाववद्वह्नौ हेत्वाभासत्वमुपपद्यते ॥

नन्वेवमपि पक्षवृत्तिसाध्याभाव पक्षावृत्तिसाध्य साध्यानधिकरणपक्ष प्रभृतीनां दोषत्वानिरूपणेन न्यूनतेतिचेन्न, तेषामपि पक्षविशेष्यकसाध्यप्रकारकानुमितिप्रतिबन्धकज्ञानविषयत्वतौल्येन (समानयोगक्षेमतया) विशेषणविशेष्यभावव्यत्यासेऽपि बाधएवान्तर्भावात् ॥

एवमेव व्यभिचारप्रभृतिषु सर्वेष्वपि हेत्वाभासस्थलेषु विशेषणविशेष्यभाववैपरीत्येन प्राप्तानां रूपान्तराणां समान योगक्षेमतां निमित्तीकृत्य यथायथं तेषुतेष्वन्तर्भावः कार्यः ॥

एवमेव बाधसत्प्रतिक्षव्याप्यभिन्नानां तत्तद्धेत्वाभासव्याप्यानामपि तत्तद्धेत्वाभासेष्वेव अन्तर्भावः कार्यः, यथा, साध्यभाववद्वृत्तित्वविशिष्टहेतोः व्यभिचारत्वे साध्याभाववद्वृत्तित्वव्याप्यवान् हेतुरपि व्यभिचारएव । हेत्वभाववत्पक्षस्य स्वरूपासिद्धित्वे हेत्वाभावव्याप्यवत्पक्षोऽपि स्वरूपासिद्धिरेव । एवमन्यत्राऽपि तत्तद्व्याप्यघटितानामपि तत्तद्दोषत्वमूह्यम् । बाधव्याप्यस्य तु सत्प्रतिपक्षरूपतया न बाधेऽन्तर्भावः । सत्प्रतिपक्षव्याप्यस्य ह्रदो वह्निमानित्यादौ वह्न्यभावव्याप्यव्याप्यवद्ध्रदादेः कथञ्चिदपि अनुमितितत्करणान्यतरप्रतिबन्धकज्ञानविषयत्वाभावेन न सत्प्रतिपक्षेऽन्तर्भावः, किन्तु तस्य दोषबहिर्भूततैवेति ध्येयम् ॥



श्रीमत् कुरुगंटुयपनामक श्रीराम
शास्त्रिविरचिते तर्कसंग्रह
सर्वस्वेऽनुमानपरि
च्छेदः समाप्तः
श्रीः श्रीः श्रीः

---

श्रीः

शिवाय नमः

# तर्कसङ्ग्रहसर्वस्वे

## उपमानपरिच्छेदप्रारम्भः

मू* उपमितिकरणमुपमानम् । संज्ञासंज्ञिसम्बन्धज्ञानमुपमितिः । तत्करणं सादृश्यज्ञानम् । अतिदेशवाक्यार्थस्मरणं व्यापारः ॥

उपमानं लक्षयति उपमितीति ॥ बोधप्रकारः अनुमानलक्षणइव ग्राह्यः । उपमितिकरणत्वं उपमानस्य लक्षणम् । उपमितिकरणत्वञ्च उपमितित्वावच्छिन्नकार्यतानिरूपितकारणताश्रयत्वे सति उपमितिव्यापारजनकत्वम् । उपमितित्वावच्छिन्ना या कार्यता अयं गवयपदवाच्यः (गवयो गवयपदवाच्यः) इत्याकारकगवयत्वावच्छिन्नविशेष्यकगवयपदवाच्यत्वप्रकारकोपमितौ विद्यमाना कार्यता, तन्निरूपिता या कारणता गोसदृशोगवयपदवाच्यः इत्याकारकगोसादृश्यावच्छिन्नविशेष्यकगवयपदवाच्यत्वप्रकारकज्ञानात्मकोपमाननिष्ठा कारणता, तदाश्रयत्वस्य गोसदृशो गवयपदवाच्यः इत्याकारकातिदेशवाक्यार्थविषयकस्मरणरूपव्यापारजनक-



त्वस्य च गोसदृशो गवयपदवाच्यः इत्याकारकातिदेशवाक्यार्थज्ञानरूपोपमाने सत्वात् लक्षणसमन्वयः ॥

अयं (गवयो) गवयपदवाच्यः इति ज्ञानं उपमितिः । गोसदृशो गवयपदवाच्यः इति अतिदेशवाक्यार्थस्मरणं व्यापारः । गोसदृशो गवयपदवाच्यः इति अतिदेशवाक्यार्थज्ञानं उपमानं । अयं फलव्यापारकरणानामाकारः ॥ व्यापारजनकत्वमात्रोक्तो ईश्वरादृष्टादौ उपमित्यसाधारणकारणत्वमात्रोक्तो अतिदेशवाक्यार्थस्मरणरूपव्यापारे च अतिव्याप्तिः, अतः उभयोपादानम् । नच यत्र उपमानोत्पत्त्यनन्तरं प्रतिबन्धकवशात् उपमितिः न जाता तत्र उपमितिकारणत्वस्याभावात् अव्याप्तिरिति वाच्यम्, फलोपधायकत्वरूपकारणत्वस्य तत्राभावेऽपि प्रकृते विनिष्टस्य फलस्वरूपयोग्यतारूपस्य कारणत्वस्य तत्राप्यक्षतत्वात् (फलोपधायकत्वञ्च स्वजनकत्व स्वसामानाधिकरण्योभयसम्बन्धेन फलविशिष्टत्वम् । फलस्वरूपयोग्यतारूपकारणत्वञ्च फलजनकतावच्छेदकधर्मवत्वम् )

उपमितिं लक्षयति संज्ञेति ॥ संज्ञानाम पदं, संज्ञी अर्थः तयोस्सम्बन्धः वाच्यवाचकभावरूपः, (वाच्यत्वरूपः) तद्विषयकंज्ञानं उपमितिः । संज्ञासंज्ञिसम्बन्धस्य ज्ञानं संज्ञासंज्ञिसम्बन्धज्ञानं ; षष्ठ्याः विषयतानिरूपकत्वमर्थः । तथाच, पदपदार्थसम्बन्धविषयकत्वे सति ज्ञानत्वं उपमितेः लक्षणम् । गवयो गवयपदवाच्यः इत्युपमितौ पदपदार्थसम्बन्धरूपवाच्यत्वविषयकत्वस्य ज्ञानत्वस्य च सत्वात् समन्वयः ।

ज्ञानत्वमात्रोक्तावनुमित्यादौ पदपदार्थसम्बन्धविषयकत्वमात्रोक्तौ अयं गवयपदवाच्यः इति संस्कारे च अतिव्याप्तिः, अतो दळद्वयोपादानम् ॥

मू॰ तथाहि, कश्चित् गवयपदार्थमजानन् कुतश्चिदारण्यकपुरुषात् गोसदृशो गवयः इति श्रुत्वा वनं गतो वाक्यार्थं स्मरन् गोसदृशपिण्डं पश्यति। तदनन्तरं अयं गवयपदवाच्यः इत्युपमितिरुत्पद्यते ॥

उपमानपरिच्छेदः
समाप्तः
श्रीः श्रीः श्रीः

---

उपमितिसामग्रीं उपमितिस्वरूपञ्च दर्शयति कश्चिदित्यादिना ॥ गोसदृशो गवयइति श्रुत्वेत्यनेनोपमानं प्रदर्शितम्। वाक्यार्थं स्मरन् इत्यनेन स्मृत्यात्मकव्यापारः प्रदर्शितः। तदनन्तरं अयंगवयपदवाच्य- इत्यनेन उपमितिस्वरूपञ्च प्रदर्शितं भवति ॥

श्रीमत् कुरुगंटुग्रपनामक श्रीरामशास्त्रि
विरचिते तर्कसंग्रह सर्वस्वे
उपमानपरिच्छेदः
समाप्तः
श्रीः श्रीः श्रीः श्रीः श्रीः

---

श्रीः

गणेशाय नमः

# तर्कसङ्ग्रहसर्वस्वे

## शब्दपरिच्छेदप्रारम्भः

मू॰ आप्तवाक्यं शब्दः ॥

शब्दं लक्षयति आप्तवाक्यमिति ॥ आप्तस्य वाक्यं आप्तवाक्यं, षष्ठ्या उच्चरितत्वमर्थः तथाच, आप्तोच्चरितत्वे सति वाक्यत्वं शब्दप्रमाण-लक्षणम्। गामानयेत्यादिप्रमाणवाक्येषु आप्तोच्चरितत्व वाक्यत्वयोः सत्वात् समन्वयः। वाक्यत्वमात्रोक्तौ अनाप्तोच्चरितवाक्येऽतिव्याप्तिः, आप्तोच्चरितत्वमात्रोक्तौ जबगडदशादावतिव्याप्तिः, अतोदळद्वयनिवेशः। नच आप्तत्वस्य यथार्थज्ञानजनकशब्दप्रयोगकर्तृत्वरूपत्वेऽपि प्रथमं महानसो वह्निमान् इति यथार्थज्ञानजनकशब्दप्रयोगकर्त्रोच्चरिते ह्रदो वह्निमान् इति वाक्येऽपि आप्तोच्चरितत्ववाक्यत्वयोः सत्वादतिव्याप्तिरिति वाच्यम्, प्रकृतप्रयोगहेतुभूतयथार्थज्ञानजन्यवाक्यत्वस्य तदर्थत्वात्, ह्रदो वह्निमान् इति वाक्यं प्रति ह्रदो वह्निमान् इति अयथार्थज्ञानस्यैव कारणत्वेन यथार्थज्ञानजन्यवाक्यत्वस्य तत्राभावात् नातिव्याप्तिः। (अर्थं बुध्वा शब्दरचनेति, न्यायेन शब्दप्रयोगं प्रति तदर्थज्ञानस्य

हेतुत्वेन गामानयेत्यादि प्रमाणवाक्येषु यथार्थज्ञानस्यैव कारणतया यथार्थज्ञानजन्यशब्दत्वस्य सत्वात् समन्वयः ॥ अत्र लक्ष्यतावच्छेदकं प्रमाणशब्दत्वमेव, नतु शब्दत्वमात्रम्। शब्दत्वमात्रस्य तत्त्वे अग्निना-सिञ्चतीत्याद्यप्रमाणशब्देष्वपि तस्य सत्वात् अतिप्रसङ्गः ॥ वस्तुतस्तु, शब्दज्ञानमेव शाब्दधीकरणमिति वक्तव्यम्, नतु शब्दः, शब्दस्यैव करणत्वे मौनिश्लोकादितः शाब्दबोधाऽनुपपत्तिः, कण्ठताल्वाद्यभिघात-संयोगजन्यध्वनिविशेषरूपस्य शब्दस्य तदानीमभावात्। शब्दज्ञानस्य करणत्वे तु लिप्याद्यभिव्यङ्ग्यस्य पदज्ञानस्य मौनिश्लोकादितः शाब्दबोध-दशायामपि सत्वात् नानुपपत्तिः ॥ शाब्दबोधकारणसामग्री तु मदीय पारिभाषिकपदार्थसङ्ग्रहे शाब्दबोधविचारे द्रष्टव्या ॥ शाब्दबोधं प्रति वृत्तिज्ञानं कारणं, वृत्तिश्च शक्तिः लक्षणाचेति द्विविधा। शक्तिः मूले निरूपयिष्यते। शक्यसम्बन्धो लक्षणा। साच जहल्लक्षणाऽजहल्लक्ष-णाचेति द्विविधा। शक्यतावच्छेदकाप्रकाकलक्ष्यतावच्छेदकप्रकारक-बोधप्रयोजिका लक्षणा जहल्लक्षणा, गंगायां घोषइत्यत्र शक्यतावच्छेदकी-भूतप्रवाहत्वाप्रकारकलक्ष्यतावच्छेदकीभूततीरत्वप्रकारकबोधजनकत्वस्यात्र लक्षणायां सत्वात्समन्वयः (अत्र तीरे घोषइति बोधः) (शक्यार्थपरित्यागे-सत्यन्यार्थग्रहणं जहल्लक्षणेति भावः) लक्ष्यतावच्छेदकरूपेण लक्ष्यशक्यो-भयबोधप्रयोजिका लक्षणाऽजहल्लक्षणा। काकेभ्यो दधि रक्ष्यतामित्यत्र दध्युपघातुकत्वेन रूपेण काककुक्कुटबिडालादिशक्यलक्ष्यबोधप्रयोजिकाऽ जहल्लक्षणैव- (अत्र- इष्टसाधनीभूतदध्युपघातुकापादानकदधिरक्षणानुकूल-कृतिमानिति बोधः) शक्यार्थापरित्यागेसत्यन्यार्थग्रहणमजहल्लक्षणेति



भावः) लक्षणाज्ञानस्थलीयशाब्दबोधसामग्री पारिभाषिकपदार्थसङ्ग्रहे निरूपिता। एषां मते जहदजहल्लक्षणा नाङ्गीक्रियते। गौणी वृत्तिरपि लक्षणायामेवान्तर्भवति। एतत्प्रपञ्चो दीपिकाव्याख्यानावसरे निरूप-यिष्यते। व्यञ्जनावृत्तेः शक्त्यनुमानाभ्यां चारितार्थ्यमपि पारि-भाषिकपदार्थसंग्रहे निरूपितम्। दीपिकायाञ्च निरूपयिष्यते, अतो नेह प्रपञ्च्यते ॥

मू* आप्तस्तु यथार्थवक्ता ॥

आप्तं लक्षयति आप्तस्त्विति ॥ यथार्थवक्तृत्वञ्च यथार्थज्ञान-जनकशब्दप्रयोगकर्तृत्वम्, पर्वतो वह्निमान् इति शब्दप्रयोक्तरि यथार्थ-ज्ञानजनकशब्दप्रयोक्तृत्वस्य सत्वात् समन्वयः। नच पूर्वकालावच्छेदेन पर्वतो वह्निमान् इति शब्दप्रयोक्तरि इदानीं ह्रदो वह्निमान् इति शब्द-प्रयोक्तर्यनाप्ते पूर्वकालावच्छिन्नशब्दप्रयोगमादाय यथार्थज्ञानजनकशब्द-प्रयोक्तृत्वस्य सत्वात् ह्रदो वह्निमान् इति शब्दप्रयोगकर्तर्यपि आप्तत्व-व्यवहारप्रसङ्ग इति वाच्यम्, तस्येष्टत्वात्। परन्तु अस्मिन् प्रयोगेऽय-माप्त इति व्यवहारस्तु नेष्टः, तत्र एतत्प्रयोगानुकूलयथार्थज्ञानजनक-शब्दप्रयोक्तृत्वस्यैव प्रत्यायानात्, तस्य तदा तस्मिन्नसम्भवात् ॥

मू* वाक्यन्तु पदसमूहः ॥

आप्तलक्षणघटकीभूतवाक्यं निर्वक्ति वाक्यमिति ॥ (पदसमूहएव वाक्यमिति नैयायिकाः। (अत्र पदं शक्तं ग्राह्यम्) परस्परान्वयान्वयि-

भावापन्नकर्तृक्रियाकारकवाचकपदसमुदायो वाक्यमिति वैयाकरणाः। नैयायिकमते पदसमूहस्यैव वाक्यतया वाक्ये क्रियापदसमभिव्याहारादश्यम्भावाभावेन नीलोघटः इत्यादिक्रियाप्रयोगविरहस्थलेऽपि वाक्यत्वमभिमतम्। वैयाकरणमते तु क्रियां विना वाक्यपरिसमाप्तेरभावेन नीलोघटइत्यादिष्वध्याहारेण वाक्यत्वमभ्युपगम्यते)

मू॰ शक्तं पदम्, अस्मात्पदादयमर्थो बोद्धव्य इतीश्वरसङ्केतः शक्तिः॥

पदं लक्षयति शक्तमिति॥ नैयायिकमते शक्तस्यैव पदत्वेन सुप्तिङन्तानां विभक्तीनां कृदादिप्रत्ययानाञ्च पदत्वमभिमतम्। वैयाकरणमते सुप्तिङन्तस्यैव पदत्वेन विभक्तीनां कृदादीनाञ्च तदन्तत्वाभावेन तेषां नैव पदत्वमभ्युपगम्यते। किन्तु सुप्तिङन्तानां रामः भवति इत्यादीनामेव पदत्वमङ्गीक्रियते॥ अस्मिन् मते पदं द्विविधम्, शक्तं लाक्षणिकञ्चेति। शक्त्याऽर्थबोधकं शक्तं, लक्षणयाऽर्थबोधकम् लाक्षणिकम्॥ एवमर्थो द्विविधः, शक्यो लक्ष्यश्चेति। शक्त्या बोध्योऽर्थः शक्यः, लक्षणया बोध्योऽर्थो लक्ष्यः। वृत्तिरपि द्विविधा, शक्तिः लक्षणाचेति। शक्तिर्नाम अस्मात्पदादयमर्थो बोद्धव्य इतीश्वरसङ्केतः (ईश्वरेच्छा।) अनेन च वाक्येन एतत्पदजन्यबोधविषयत्वप्रकारिकायाः एतदर्थविशेष्यकेच्छायाः आकारः प्रदर्शितः। तथाच, अर्थस्य एतादृशशक्तौ विशेष्यतया शक्तिनिरूपितमुख्यविशेष्यताश्रयत्वं शक्यत्वमिति फलितम्, पदस्य शक्तौ परम्परया प्रकारत्वेन शक्त्या



परम्परया निरूपितप्रकारत्वं शक्तत्वमिति फलितम्। शक्त्या परम्परानिरूपितप्रकारत्वं नाम, शक्तिनिरूपितमुख्यविशेष्यतानिरूपितप्रकारतानिरूपितप्रकारतानिरूपितप्रकारतानिरूपितप्रकारताश्रयत्वम्। एतत्पदजन्यबोधविषयोऽयमर्थ इतीश्वरेच्छायाः शक्तिरूपतया शक्तिनिरूपिता मुख्यविशेष्यता अर्थनिष्ठा विशेष्यता, तन्निरूपिता प्रकारता विषयत्वनिष्ठा प्रकारता, तन्निरूपिता प्रकारता बोधनिष्ठा प्रकारता, तन्निरूपिता प्रकारता जन्यत्वनिष्ठा प्रकारता, तन्निरूपिता प्रकारता पदनिष्ठा प्रकारता, तदाश्रयत्वं पदे वर्तते इति। अत्र विशेष्यतायां मुख्यत्वानुपादाने बोधांशे विषयत्वस्यापि विशेष्यतया शक्तिनिरूपितविशेष्यतापदेन विषयत्वनिष्ठविशेष्यतायाः परिग्रहणे तन्निरूपितनिरुक्तप्रकारताश्रत्वस्य तत्तत्पदत्वरूपानुपूर्व्यां सत्त्वात् तत्राऽपि तदर्थशक्तताव्यवहारप्रसङ्गः, अतो मुख्यत्वनिवेशः। विषयत्व निष्ठविशेष्यतायाः मुख्यत्वाभावात् नातिप्रसङ्गः॥

शक्यसम्बन्धो लक्षणा, सच संबन्धः कचित् साक्षात्संबन्धः कचित् परंपरासंबन्धश्च भवति। यथा, गङ्गायां घोष इत्यत्र गङ्गापदशक्यप्रवाहस्य संयोगरूपसाक्षात्संबन्धस्य तीरे सत्वात् तत्र तीरबोधे साक्षात्संबन्धः प्रयोजकः। एवमेव मञ्चाः क्रोशन्ति यष्टीः प्रवेशय इत्यादौ स्वशक्यमञ्चयष्ट्यादिसंयोगरूपः साक्षात्संबन्धः पुरुषबोधोपयोगी। काकेभ्यो दधि रक्ष्यतां इत्यत्र काकपदशक्यकाकानां स्वनिष्ठदध्युपघातुकत्वाश्रयत्वरूप परंपरासंबन्धः दध्युपघातुकत्वावच्छिन्नबोधोपयोगी। एवं द्विरेफमानयेत्यत्र द्विरेफपदशक्यरेफद्वयस्य स्वघटितपदवाच्यत्वरूप

परंपरासंबन्धः तत्र मधुकरबोधे समुपयुज्यते। एवं रीत्या स्थलभेदेन साक्षात्परंपरासंबन्धानां लक्षणारूपत्वं ज्ञेयम् ॥ (सा च लक्षणा पुनः द्विविधा, निरूढलक्षणा स्वारसिकलक्षणाचेति। अनादितात्पर्यविषयीभूता लक्षणा निरूढलक्षणा। यत्पदश्रवणानन्तरमचिरेणैव यया लक्षणया यत्पदार्थोपस्थितिः भवति तत्पदार्थोपस्थापिका सा निरूढलक्षणेति फलितम्। शक्तिवत् अविलम्बितलक्ष्यप्रतीतिप्रयोजिका लक्षणा निरूढलक्षणेति परमार्थः। यथा, गङ्गायां घोषः, मञ्चाः क्रोशन्ति, काकेभ्यो दधि रक्ष्यतां इत्यादिषु निरूढलक्षणा ॥ कथञ्चित् प्रकरणादिना लक्ष्योपस्थापिकास्वारसिकलक्षणा। विलम्बितप्रतीतिप्रयोजिकेति पर्यवस्यति। यथा, सप्त पदार्थाः, नव द्रव्याणि, इत्यादिषु विभाजकधर्मसप्तकान्यतमवदादिबोधिका स्वारसिका भवति। एतल्लक्षणाद्वयविषये बहूनां बहुविधाऽभिप्रायास्सन्ति, विषयान्तरत्वेन नेह तत् प्रपञ्च्यते)

**मू* आकांक्षा योग्यता सन्निधिश्च वाक्यार्थज्ञानहेतुः। पदस्य पदान्तरव्यतिरेकप्रयुक्तान्वयाननुभावकत्वं आकांक्षा ॥**

शाब्दबोधसामग्रीं दर्शयति आकांक्षेति ॥ अनुक्तानां पदज्ञान पदार्थोपस्थिति तात्पर्यज्ञानादीनां समुच्चयार्थः चकारः ॥

(ननु आकांक्षा नाम इच्छा, योग्यता च उत्कृष्टतासंपादकसद्गुणवत्वम्, सन्निधिश्च द्वयोरेकत्र समावेशः, तथाच एतेषां शाब्दबोधकारणत्वे वक्तव्ये श्रोतृनिष्ठानां तेषां कारणत्वं वक्तव्यम्, श्रोतुरेव



बोधोदयात्, तथाच शाब्दबोधेच्छारहितस्य अयोग्यस्य वक्तृसमावेशरहितस्यापि शाब्दबोधोत्पत्त्या नैतेषां कारणत्वकथन मुचितमिति शङ्कानिरासाय आकांक्षादीन् निर्वक्ति पदस्येति)

पदस्येति ॥ पदस्येत्यत्र पदान्तरेत्यत्रापि पदपदं यत्पदपरम्। षष्ठ्याः आधेयत्वमर्थः, व्यतिरेकः अभावः अन्वयाऽननुभावकत्वं शाब्दबोधजनकत्वाभावः, षष्ठ्यर्थस्य अन्वयाऽननुभावकत्वेऽन्वयः, तत्पदे तत्पदवत्वमित्यध्याहार्यम्। तथाच, यत्पदनिष्ठशाब्दबोधजनकत्वाभावः यत्पदान्तराभावप्रयुक्तः तत्पदे तत्पदवत्वं आकांक्षेति योजना। (तत्पदे तत्पदवत्वञ्च स्वाव्यवहितोत्तरत्व स्वाव्यवहितपूर्वत्वान्यतरसंबन्धेन तत्पदविशिष्टत्वम्) घटमानयेत्यत्र, घटपदनिष्ठः घटीयं कर्मत्वमिति शाब्दबोधजनकत्वाभावः अम्पदाभावप्रयुक्तः अम्पदाभावे घटपदमात्रसत्वेऽपि घटनिष्ठं कर्मत्वमिति बोधानुदयात्, अतः घटपदे अम्पदवत्वं अम्पदे घटपदवत्वं वा वर्ततइति तस्मिन् वाक्ये नाऽकांक्षायाः क्षतिः ॥

**मू* अर्थाबाधो योग्यता ॥**

योग्यतां लक्षयति अर्थाबाधेति ॥ अर्थस्याबाधोऽर्थाबाधः, अबाधः बाधनिश्चयाभावः, (बाधनिश्चयः तदभावप्रकारकनिश्चयः) एकपदार्थे इत्यध्याहार्यम्, अर्थस्येत्यत्रार्थपदं अपरपदार्थपरम्, तथाच, एकपदार्थे अपरपदार्थबाधनिश्चयाभावः योग्यतेत्यर्थः पर्यवसितः। तथाच एकपदार्थइत्यत्र सप्तम्याः विशेष्यतानिरूपकत्वार्थकतया अर्थस्ये-

स्यत्र षष्ठ्याः प्रतियोगितानिरूपकत्वार्थकतया तादृशविशेष्यकत्वस्य निश्चये प्रतियोगितानिरूपकत्वस्य बाधशब्दार्थीभूताऽभावे च अन्वये एकपदार्थविशेष्यकः अपरपदार्थप्रतियोगिकाभावप्रकारकश्च यो निश्चयः तदभावः योग्यतेति फलितम्। अग्निना सिञ्चतीत्यत्र अग्निकरणकत्वाभाववत् सेचनं इति सेचनविशेष्यकाग्निकरणकत्वाभावप्रकारकबाधनिश्चयसद्भावेन तन्निश्चयाभावरूपयोग्यताया अभावेन अग्निकरणकं सेचनं इति प्रमात्मकबोधो न जायते। जलेन सिञ्चतीत्यत्र जलकरणकत्वाभाववत्सेचनमिति बाधनिश्चयाभावेन जलकरणकं सेचनमिति-प्रमात्मकबोधो जायते। अतो योग्यताऽपि शाब्दबोधे कारणमिति सिद्धम् ॥

मू॰ पदानामविलम्बेनोच्चारणं सन्निधिः ॥

सन्निधिं निरूपयति पदानामिति ॥ अविलम्बितप्रवृत्तिकं पदोच्चारणं सन्निधिः। प्रहरे प्रहरेऽसहोच्चरितानां गामानयेत्यादि-पदानां निरुक्तसान्निध्याभावेन न तादृशवाक्याच्छाब्दबोधः ॥ वस्तुतस्तु, अविलम्बेन पदार्थोपस्थितिरेव सन्निधिः, उच्चारणन्तु तदुपयोगितयोक्तं, अन्यथा, मौनिश्लोकादिस्थले कण्ठताल्वाद्यभिघातसंयोगजन्यध्वनिरूपस्य उच्चारणस्य असम्भवेन शाब्दबोधानुपपत्तिः ॥

मू॰ आकांक्षादिरहितं वाक्यं न प्रमाणम्। यथा, गौरश्वः पुरुषो हस्तीति वाक्यं न प्रमाणम् आकांक्षाविरहात्। अग्निना सिञ्चतीति वाक्यं



न प्रमाणम्, योग्यताविरहात्। प्रहरे प्रहरेऽसहोच्चरितानि गामानयेत्यादिपदानि न प्रमाणम्, सान्निध्याभावात्। वाक्यं द्विविधम्, वैदिकं लौकिकञ्चेति। वैदिकमीश्वरोक्तत्वात्सर्वमपि प्रमाणम्। लौकिकन्तु आप्तवाक्यं प्रमाणम्। अन्यदप्रमाणम्। वाक्यार्थज्ञानं शाब्दज्ञानम्। तत्करणं शब्दः। एवं यथार्थानुभवो निरूपितः॥

इति शब्दपरिच्छेदः

समाप्तः

श्रीः श्रीः श्रीः

---

आकांक्षाद्यभावे शाब्दबोधाभावं क्रमेण स्थलभेदेन निर्दिशति यथा गौरश्वइत्यादिना ॥ ईश्वरोक्तत्वात्सर्वमपि प्रमाणमिति वाक्यं मनुप्रभृतिभिः मुनिभिरुक्तानां स्मृतिपुराणेतिहासादीनामुपलक्षणम् ॥

श्रीमत् कुरुगंट्टुपनामक श्रीरामशास्त्रि

विरचिते तर्कसंग्रहसर्वस्वे

शब्दपरिच्छेदः

समाप्तः

श्रीः श्रीः श्रीः श्रीः श्रीः

---

श्रीः

श्रीमते नारायणाय नमः

# तर्कसङ्ग्रहसर्वस्वे

## अयथार्थानुभवादिनिरूपणम्

**मू॰* अयथार्थानुभवः त्रिविधः, संशयविपर्ययतर्कभेदात्। एकस्मिन् धर्मिणि विरुद्ध नानाधर्मप्रकारकज्ञानं संशयः। यथा, स्थाणुर्वा पुरुषोवेति ॥**

एवं यथार्थानुभवं प्रसक्तानुप्रसक्तां तत्सामग्रीञ्च निरूप्य अयथार्थानुभवं निरूपयति अयथार्थानुभव इति ॥ संशयं लक्षयति एकस्मिन्निति ॥ धर्मिणीत्यत्र सप्तम्याः विशेष्यतानिरूपकत्वार्थकत्वेन एकधर्मिविशेष्यकत्वे सति विरुद्धनानाधर्मप्रकारकत्वे सति ज्ञानत्वं संशयस्य लक्षणम् फलितम्। स्थाणुर्वा पुरुषोवेत्यत्र संशये पुरोवर्तिवस्तुरूपैकधर्मिविशेष्यकत्वे सति स्थाणुत्व स्थाणुत्वाभावरूपविरुद्धनानाधर्मप्रकारकत्वे सति ज्ञानत्वस्य विद्यमानत्वात् लक्षणसमन्वयः ॥

केचन स्थाणुर्वा पुरुषोवेति वाक्येन संशयाभिलापस्थले स्थाणुपुरुषपदयोः स्थाणुत्वपुरुषत्वार्थकत्वम्, उभयत्र वा शब्दयोः (वाकारयोः)



स्थाणुत्वाभाव पुरुषत्वाभावार्थकत्वञ्च अङ्गीकृत्य स्थाणुत्व स्थाणुत्वाभाव पुरुषत्व पुरुषत्वाभाव कोटिकं संशयमङ्गीकुर्वन्ति। एतमन्ते च भावद्वयकोटिकसंशयो नाभ्युपगम्यते ॥

अन्येतु, भावद्वयकोटिकसंशयमङ्गीकुर्वन्तः स्थाणु पुरुषपदयोः स्थाणुत्व पुरुषत्वार्थकत्वम्, वाकारद्वयस्य अयं स्थाणुः पुरुषश्चेति समुच्चयव्यावृत्तप्रकारताद्वयनिरूपितैकविशेष्यताकत्वसूचकत्वञ्च अङ्गीकृत्य स्थाणुत्व पुरुषत्व कोटिकं संशयमङ्गीकुर्वन्ति ॥

अपरे, भावद्वयकोटिकसंशयमनङ्गीकुर्वन्तः स्थाणुपदस्य स्थाणुत्वार्थकत्वम्, पुरुषपदस्य स्थाणुत्वाभावार्थकत्वञ्च अङ्गीकृत्य स्थाणुत्व स्थाणुत्वाभावकोटिकं पुरुषत्व पुरुषत्वाभावकोटिकं वा संशयमङ्गीकुर्वन्ति। अत्रापि वाकारद्वयं निरुक्त विशेष्यतासूचकमेव ॥

भावद्वयकोटिकसंशयाङ्गीकर्तृमते विरुद्धनानाधर्मपदेन स्थाणुत्व पुरुषत्वरूपधर्मौ भावद्वयकोटिकसंशयानङ्गीकारे स्थाणुत्व स्थाणुत्वाभावरूपभावाभावौ चादाय लक्षणसमन्वयः कर्तव्यः।

ज्ञानत्वमात्रोक्तौ विपर्ययादिष्वतिव्याप्तिः। ज्ञानत्वानुपादाने स्थाणुर्वा पुरुषोवेति संशयात् जायमाने संस्कारे (स्थाणुर्वा पुरुषोवेति संशयो भूयात् इतीच्छायां) अतिव्याप्तिः, अतो ज्ञानत्वनिवेशः कार्यः। एकधर्मिविशेष्यकत्वे सति ज्ञानत्वमात्रोक्तौ पर्वतो वह्निमानित्यनुमितावतिव्याप्तिः, विरुद्धनानाधर्मप्रकारकत्वनिवेशे तु वह्नेरेकस्यैव तत्र प्रकारतया विरुद्धनानाधर्मप्रकारकत्वाभावात् नातिव्याप्तिः। विरुद्धनानाधर्मप्रकार-

कत्वे सति ज्ञानत्वमालोक्तौ पर्वतो वह्निमान् ह्रदो वह्न्यभाववान् इत्याकारकसमूहालम्बनज्ञाने वह्निवह्न्यभावरूपनानाधर्मयोः पर्वतह्रदरूपधर्मिभेदेन प्रकारत्वादतिव्याप्तिः, एकधर्मिविशेष्यकत्वोपादाने तु निरुक्तज्ञानस्य धर्मिद्वयमुख्यविशेष्यकत्वेन एकधर्मिविशेष्यकत्वाभावात् नातिव्याप्तिः। नानापदानुपादाने घटत्वविरुद्धपटत्ववान् पटः इति यथार्थज्ञाने पटरूपैकधर्मिविशेष्यकत्व घटत्वविरुद्धपटत्वरूपविरुद्धधर्मप्रकारत्व ज्ञानत्वानां सत्वात् तत्रातिव्याप्तिः, अतो नानापदम्, तन्निवेशे तत्र पटत्वरूपैकधर्मस्यैव प्रकारत्वेन नानाधर्मप्रकारकत्वाभावात् नातिव्याप्तिः। विरुद्धपदानुपादाने घटपटवत् भूतलं इति एकत्र द्वयमिति रीत्याऽवगाहिज्ञाने एकधर्मिविशेष्यकत्व घटपटरूपनानाधर्मप्रकारकत्व ज्ञानत्वानां सत्वात् तत्राऽतिव्याप्तिः, विरुद्धपदनिवेशे तु घटपटयोर्विरुद्धत्वाभावेन विरुद्धनानाधर्मप्रकारकत्वाभावात् नातिव्याप्तिः॥

नच पर्वतो वह्निमान् ह्रदो वह्न्यभाववान् इति ज्ञाने धर्मिद्वय विशेष्यकत्वस्य सत्वेन (शते पञ्चाशत् इति न्यायेन) एकधर्मिविशेष्यकत्वस्यापि सत्वादतिव्याप्तिरिति वाच्यम्, एकधर्मिनिष्ठविशेष्यतानिरूपिता या विरुद्धनानाधर्मनिष्ठा प्रकारता तन्निरूपकत्वस्य लक्षणघटकत्वात्, तथाच, अत्र ज्ञाने एकस्मिन् धर्मिणि नानाधर्मयोरप्रकारत्वात् नातिव्याप्तिः। नच द्रव्यं वह्निमत् ह्रदो वह्न्यभाववान् इति समूहालम्बनज्ञाने द्रव्यत्वेन रूपेण ह्रदस्यापि विशेष्यतया एकस्मिन् ह्रदरूपे धर्मिणि वह्नितदभावयोः प्रकारत्वेन अतिव्याप्तितादवस्थ्यमिति वाच्यम्,



एकधर्मावच्छिन्नविशेष्यतानिरूपितत्वस्य विरुद्धनानाधर्मनिष्ठप्रकारतायां विशेषणीयत्वात्, तथाच द्रव्यत्व ह्रदत्वाभ्यां भासमाने ह्रदरूपैकधर्मिणि नानाधर्मयोः प्रकारत्वेऽपि एकधर्मावच्छिन्ने द्रव्यत्वावच्छिन्ने ह्रदत्वावच्छिन्ने वा विरुद्धनानाधर्मयोः अप्रकारत्वेन एकधर्मावच्छिन्नविशेष्यता निरूपितविरुद्धनानाधर्मनिष्ठप्रकारताकत्वाभावात् नातिव्याप्तिः॥

(नच ह्रदो वह्निमान् वह्न्यभाववांश्चेति समुच्चयज्ञाने ह्रदत्वरूपैकधर्मावच्छिन्नविशेष्यतानिरूपितविरुद्धनानाधर्मनिष्ठप्रकारतानिरूपकत्वस्य सत्वादतिव्याप्तिरिति वाच्यम्, प्रकारताविशिष्टविशेष्यतानिरूपकत्वस्य तदर्थत्वात्, विशेष्यतायां प्रकारतावैशिष्ट्यञ्च स्वनिरूपितत्व, स्वावच्छेदकधर्मावच्छिन्नप्रतियोगिताकाभावत्वावच्छिन्नप्रकारतानिरूपितत्वोभय संबन्धेन, तथाच एतस्मिन् समुच्चयज्ञाने प्रकारताद्वयनिरूपितविशेष्यताद्वयस्याङ्गीकृतत्वेन वह्नित्वावच्छिन्नप्रकारतानिरूपितविशेष्यतायाः वह्न्यभावत्वावच्छिन्नप्रकारतानिरूपितविशेष्यतायाश्च परस्परं भिन्नतया निरुक्तसम्बन्धद्वयेन प्रकारताविशिष्टा विशेष्यता न काप्यत्र विशेष्यता भवितुमर्हति, कुतः, स्वपदेन वह्नित्वावच्छिन्नप्रकारतायाः परिग्रहणे स्वनिरूपितविशेष्यतायां स्वाभावनिष्ठप्रकारतानिरूपितत्वं न सम्भवति, स्वाभावनिष्ठप्रकारतानिरूपितविशेष्यतायां स्वनिरूपितत्वं न सम्भवति, अतः निरुक्तसम्बन्धद्वयेन प्रकरताविशिष्टविशेष्यता न कापि एतत्ज्ञानीया प्रसिद्धा भवति, अतो नातिव्याप्तिः। संशये च प्रकारताद्वयनिरूपितैकविशेष्यताया अङ्गीकृतत्वेन तादृशप्रकारताविशिष्टविशेष्यतानिरूपकत्वस्य

सत्वात् समन्वयः सम्भवतीति न काप्यनुपपत्तिः। भावद्वयकोटिक-संशयाङ्गीकर्तृमते स्वनिरूपितत्व स्वाश्रयविरुद्धधर्मनिष्ठप्रकारतानिरूपितत्वो-भयसम्बन्धेन प्रकारताविशिष्ट्यं ग्राह्यम्, अन्यथा, घटत्ववान् पटत्ववांश्च घटः इति समुच्चयेऽतिव्याप्तिः)

(वह्न्यभाववद्ध्रदो वह्निमान् इति नियताहार्यनिश्चये विरुद्धयोः वह्नि तदभावयोः विषयत्वेऽपि वह्न्यभावनिष्ठविषयताया अत्र विशेष्यता-वच्छेदकतारूपत्वेन अवच्छेदकत्वानात्मकप्रकारताविशिष्टविशेष्यताकत्वस्य लक्षणत्वेन विवक्षिततया तत्र एतादृशलक्षणाभावेन अतिव्याप्त्यभावात्) संशयमभिनीय दर्शयति स्थाणुर्वेति ॥

**मू* मिथ्याज्ञानं विपर्ययः। यथा, शुक्तौ इदं-रजतं इति ॥**

विपर्ययं लक्षयति मिथ्येति ॥ मिथ्या च तत् ज्ञानञ्चेति कर्मधारयः। तत्र ज्ञाने मिथ्यात्वञ्च तदभाववद्विशेष्यकत्वविशिष्ट-तत्प्रकारकत्वरूपम्। तथाच, तदभाववद्विशेष्यकत्वे सति तत्प्रकारकत्वे सति ज्ञानत्वं विपर्ययलक्षणमिति फलितम्। तथाच शुक्तौ इदंरजतं इति ज्ञाने तत्पदग्राह्यरजतत्वाभाववद्विशेष्यकत्व रजतत्वप्रकारकत्व ज्ञान-त्वनां सत्वात् समन्वयः। नचैवंसति स्थाणुर्वा पुरुषोवेति संशये यदि वह्निः नस्यात् तर्हि धूमोऽपि नस्यात् इति तर्के च तदभाववद्विशेष्यकत्व-घटितलक्षण-सत्वात् अतिव्याप्तिरिति वाच्यम्, तर्कभिन्नत्वनिश्चयत्वयोः



निवेशनीयत्वात्, संशये निश्चयत्वा (संशयान्यत्वा) भावेन तर्के तर्क-भिन्नत्वाभावेन च नातिव्याप्तिः ॥

**मू* व्याप्यारोपेण व्यापकारोपः तर्कः। यथा, यदि वह्निः न स्यात् तर्हि धूमोपि न स्यादिति ॥**

तर्कं लक्षयति व्याप्यारोपेणेति ॥ व्याप्यस्यारोपः व्यापक स्यारोपः इत्यत्र उभयत्रापि षष्ठ्याः विषयतानिरुपकत्वमर्थः। उभयत्रापि आरोपो भ्रमः। व्याप्यारोपेणेत्यत्र तृतीयायाः जन्यत्वमर्थः, तथाच व्याप्यविषयकभ्रमजन्यव्यापकविषयभ्रमत्वं तर्कस्य लक्षणम्। व्याप्य-विषयको यो भ्रमः यदि वह्न्यभाववान् स्यादिति भ्रमः, तज्जन्यो यो व्यापकविषयकभ्रमः धूमाभाववान् स्यादिति भ्रमः, तादृशभ्रमत्वस्य यदि वह्न्यभाववान् स्यादिति भ्रमजन्ये धूमाभाववान्स्यादिति भ्रमे (तर्करूपे) विद्यमानत्वात् लक्षणसमन्वयः ॥

पर्वतो वह्निमान् धूमात् इति केनचित् पुंसा धूमरूपहेतुना वह्नौ साधनीये सति पर्वते धूमोऽस्तु वह्निः मास्त्वित्यप्रयोजकशङ्कायां प्रसक्तायां सत्यां तच्छङ्कानिवृत्त्यर्थं अनुमानकर्ता धूमं प्रति वह्नेः कारणत्वेन (कारणाभावात् कार्याभाव इति नियमेन) यदि वह्निः न स्यात् तर्हि धूमोऽपि न स्यादिति कार्यकारणभावभङ्गानुकूलः तर्कः सम्पाद्यः ॥ तर्कं प्रति व्याप्यव्यापकयोः बाधनिश्चयः कारणं भवतीति वक्तव्यम्। अन्यथा, पर्वते धूमोऽस्तु वह्निः मास्तुइत्यत्राप्रयोजकशङ्का-

वतरणे इष्टापत्तिरेवाभ्युपगम्येत । ततश्च तर्कानुत्पत्तिः प्रसज्येतेति तस्य कारणत्वमावश्यकम् ॥

**मू* स्मृतिरपि द्विविधा, यथार्थाऽयथार्था चेति । प्रमाजन्या यथार्था । अप्रमाजन्याऽयथार्था ॥**

एवमनुभवं निरूप्य स्मृतिं निरूपयति स्मृतिरित्यादिना ॥ यथार्थस्मृतिं लक्षयति प्रमेति ॥ प्रमाजन्यत्वे सति स्मृतित्वं यथार्थस्मृतेः लक्षणम् । स्मृतित्वमात्रोक्तौ अयथार्थस्मृतौ प्रमाजन्यत्वमात्रोक्तौ प्रमाध्वंसे च अतिव्याप्तिः, अतः दळद्वयोपादानम् । नच गुणत्वदळेनैव प्रमाध्वंसेऽतिव्याप्तिवारणसम्भवे स्मृतित्वपर्यन्तानुसरणं व्यर्थमिति वाच्यम्, प्रमाजन्यसंस्कारेऽतिव्याप्तिवारणाय तत्सार्थक्यात् । नच ज्ञानत्वदळेनैव संस्कारेऽतिप्रसङ्गवारणसम्भवेन स्मृतित्वस्य वैयर्थ्यमेवेति वाच्यम्, दण्डरूपविशेषणप्रमाजन्यत्वज्ञानत्वयोः दण्डी पुरुष इति अनुभवरूपविशिष्टबुद्धौ सत्त्वात् तत्रातिव्याप्तिवारणाय स्मृतित्वस्य सार्थक्यात् । नच विशिष्टबुद्धिं प्रति विशेषणज्ञानमेव कारणं, नतु विशेषणप्रमा, अतः तत्कारणतावच्छेदकं बुद्धित्वमेव, नतु प्रमाणत्वम्, अतः प्रमात्वावच्छिन्नजनकतानिरूपितजन्यत्वदळेनैव ध्वंसे विशिष्टबुद्धौ च अतिव्याप्तिवारणेन स्मृतित्वस्य वैयर्थ्यमेव (ध्वंसं प्रति प्रतियोगिनः प्रतियोगित्वेन तत्तद्व्यक्तित्वेन वा कारणत्वात्) इति वाच्यम्, इष्टापत्तेः । अतएव ग्रन्थकृता स्मृतित्वं विहाय प्रमाजन्या यथार्थेत्येतावदेव मूलेऽभिहितम् ॥

अयथार्थस्मृतिं लक्षयति अप्रमेति ॥ अप्रमाजन्यत्वे सति स्मृतित्वं अयथार्थस्मृतेः लक्षणम् । दळसार्थक्यं विचारश्च पूर्ववत् द्रष्टव्यः ॥



**मू* सर्वेषामनुकूलतया वेदनीयं सुखम् ॥**

सुखं लक्षयति सर्वेषामिति ॥ अत्र षष्ठ्याः समवेतत्वं तृतीयायाः प्रकारतानिरूपकत्वं, विद्धातोः ज्ञानं, तदुत्तरवर्तिप्रत्ययस्य विषयत्वञ्चार्थः । तथाच सर्वसमवेतानुकूलत्वप्रकारकज्ञानविषयत्वं सुखस्य लक्षणम् इति फलितम् । सर्वसमवेतं अनुकूलत्वप्रकारकं यत् ज्ञानं 'सुखं मदनुकूलं' इति ज्ञानं, तद्विषयत्वस्य सुखे सत्त्वात् समन्वयः । अत्र विषयत्वं विशेष्यतारूपं ग्राह्यम्, अन्यथा निरुक्तज्ञानीयप्रकारतामादायानुकूलत्वादावतिव्याप्तिः । सर्वपदाभावे घटादावपि तादृशविषयत्वस्य सत्त्वादतिव्याप्तिः, सर्वपदनिवेशे तु सर्वेषां घटो मदनुकूलः इति ज्ञानाभावेन नातिव्याप्तिः । नचैवमपि शत्रुसुखस्य तत्प्रतिपक्षिणां प्रतिकूलतया तत्र सर्वसमवेतानुकूलत्वप्रकारकज्ञानविषयत्वस्याभावेनाव्याप्तिः, वैषयिके सुखे साधूनां द्वेषदर्शनेन तत्र सर्वसमवेतानुकूलत्वप्रकारकज्ञानविषयत्वस्याभावादव्याप्तिश्चेति वाच्यम् । इतरेच्छानधीनेच्छाविषयत्वस्य तल्लक्षणत्वात्, प्रथमं सुखेच्छायामुत्पन्नायां सुखसाधनेच्छा समुदेति, सुखेच्छातु इदं सुखं इति सुखत्वप्रकारकज्ञानाज्जायते, तथाच सुखेच्छां प्रत्यन्येच्छाः न कारणीभवितुमर्हन्ति, तथाच सर्वासाञ्च भोजनादीच्छानां सुखेच्छानन्तरमुत्पद्यमानत्वेन सुखेच्छाधीनतया सुखेच्छायास्तु स्वेतरेच्छानधीनतया इतरेच्छानधीना या इच्छेत्युक्तौ सुखेच्छा भवति, तद्विषयत्वं सुखे वर्तत इति लक्षणसमन्वयः । सुखातिरिक्तविषये सुखेच्छारूपेतरेच्छाधीनेच्छाविषयत्वस्यैव सत्त्वात् विषयेषु नातिव्याप्तिः । इच्छाविषयत्वमात्रोक्तौ भोजनादावतिव्याप्तिः,

इतरेच्छानधीनत्वस्येच्छायां निवेशे तु भोजनादीच्छायाः सुखेच्छारूपेतरेच्छाधीनतया नातिव्याप्तिः ॥

मू॰* सर्वेषां प्रतिकूलतया वेदनीयं दुःखम् ॥

दुखं लक्षयति सर्वेषामिति ॥ अर्थक्रमः पूर्ववत् ॥ सर्वसमवेतप्रतिकूलत्वप्रकारकज्ञानविषयत्वं दुःखस्य लक्षणमिति फलितम्। सर्वसमवेतं प्रतिकूलत्वप्रकारकं यत् ज्ञानं 'दुःखं मत्प्रतिकूलं' इति ज्ञानं, तद्विषयत्वं दुःखे वर्तते इति समन्वयः। अत्रापि विषयत्वं विशेष्यतारूपं ग्राह्यम्, अन्यथा पूर्ववत् प्रतिकूलत्वादावतिव्याप्तिः। सर्वपदाभावे साधुसमवेतप्रतिकूलत्वप्रकारकज्ञानविषयत्वस्य वैषयिकसुखादौ सत्वादतिव्याप्तिः। अतः सर्वपदोपादानम्। नचैवमपि सर्पादेः शत्रुसुखादेश्च सर्वसमवेतप्रतिकूलत्वप्रकारकज्ञानविषयत्वादतिव्याप्तिरिति वाच्यम्, इतरद्वेषानधीनद्वेषविषयत्वस्य तल्लक्षणत्वात्, प्रथमं दुःखे द्वेषात् दुःखसाधनेषु सर्पादिषु द्वेषः, अतो विषयेषु द्वेषः दुःखद्वेषाधीनः, दुःखद्वेषस्तु इदं दुःखं इति ज्ञानात् जायते, अतः इतरद्वेषानधीनो यो द्वेषः दुःखद्वेषः, तद्विषयत्वस्य दुःखे सत्वात् समन्वयः। शत्रुसुखादावपि दुःखद्वेषाधीनद्वेषविषयत्वस्य सत्वात् नातिव्याप्तिः। द्वेषविषयत्वमात्रोक्तौ सर्पादावतिव्याप्तिः, द्वेषे इतरद्वेषानधीनत्वनिवेशे तु सर्पादिषु द्वेषस्यापि दुःखद्वेषाधीनतया नातिव्याप्तिः। (फलेच्छा उपायेच्छाकारणम्, फलद्वेषः उपायद्वेषकारणम्, फलेच्छाफलद्वेषौ तु फलज्ञानजन्यौ इति विवेकः)



मू॰* इच्छा कामः, क्रोधो द्वेषः, कृतिः प्रयत्नः ॥

अहमिच्छामि, अयं क्रुद्धः, अहं करोमि इत्यादिप्रतीतिविषयतावच्छेदकमिच्छात्वादिकमिच्छादीनां लक्षणमिति बुबोधयिषुरन्नम्भट्टः इच्छा कामः, क्रोधो द्वेषः, कृतिः प्रयत्नः, इत्यादिना इच्छाद्वेषप्रयत्नानां पर्यायपदान्येवं प्रादर्शयत् ॥ अथवा, इच्छाप्रयत्नयोः पृथक् लक्षणे अपि सम्भवतः, तथाहि, ज्ञानजन्यत्वे सति कृतिजनकत्वं इच्छायाः लक्षणम्। जानाति, इच्छति, यतते, इति क्रममनुसृत्य ज्ञानजन्यत्वकृतिजनकत्वयोरिच्छायां सत्वात् समन्वयो बोध्यः ॥ (इच्छाजन्यत्वे सति गुणत्वं) कार्यमात्रकारणतावच्छेदकत्वं कृतिलक्षणं बोध्यम् (पूर्वक्रममनुसृत्येच्छाजन्यत्वं) कार्यमात्रं प्रति कर्तुः कारणत्वेन कार्यमात्रकारणतावच्छेदकत्वञ्चास्तीति समन्वयो ग्राह्यः ॥ यद्वा ॥ आख्यातशक्यतावच्छेदकधर्मवत्वम् कृतिलक्षणं बोध्यम्। आख्यातमात्रस्य लाघवेन कृतित्वावच्छिन्ने शक्त्यङ्गीकरणेन आख्यातशक्यतावच्छेदककृतित्वमादाय समन्वयो बोध्यः ॥

मू॰* विहितकर्मजन्यो धर्मः ॥

धर्मं लक्षयति विहितेति ॥ विहितकर्मजन्यत्वं धर्मस्य लक्षणम्। यागादिविहितकर्मजन्यत्वस्य धर्मे सत्वात् समन्वयः। नचैवं विहितकर्मजन्यत्वस्य विहितकर्मध्वंसे सत्वादतिव्याप्तिरिति वाच्यम्, गुणत्वस्यापि निवेशनीयत्वात्। नचैवमपि प्रत्यक्षे विषयस्य कारणतया देवतावन्दनादिरूपविहितकर्मविषयकप्रत्यक्षे विहितकर्मजन्यत्वगुणत्वयोस्सत्वात् अति-

व्याप्तिरिति वाच्यम्, गुणपदस्यातीन्द्रियगुणपरत्वात्, तादृशप्रत्यक्षस्य मनइन्द्रियग्राह्यतयाऽतीन्द्रियत्वाभावात् नातिव्याप्तिः ॥

मू॰* निषिद्धकर्मजन्योऽधर्मः ॥

अधर्मं लक्षयति निषिद्धेति ॥ निषिद्धकर्मजन्यत्वमधर्मस्य लक्षणम्, निषिद्धकर्म कलञ्जभक्षणादि, तज्जन्यत्वमधर्मे वर्तते इति समन्वयः। नचैवं निषिद्धकर्मजन्यत्वस्य निषिद्धकर्मध्वंसे सत्वादतिव्याप्तिरिति वाच्यम्, गुणत्वस्यापि निवेशनीयत्वात्। नचैवं अविहितकर्मविषयकप्रत्यक्षे दळद्वयसत्वादतिव्याप्तिरिति वाच्यम्, गुणपदस्य अतीन्द्रियगुणपरत्वात् नातिव्याप्तिः ॥

मू॰* बुद्ध्यादयोऽष्टावात्ममात्रवृत्तिगुणाः। बुद्धीच्छाप्रयत्ना नित्या अनित्याश्च। नित्या ईश्वरस्य, अनित्या जीवस्य ॥ संस्कारस्त्रिविधः, वेगो भावना स्थितस्थापकश्चेति। वेगः पृथिव्यादिचतुष्टयमनोवृत्तिः ॥

प्रकृते आत्मेतरावृत्तित्वमेव आत्ममात्रवृत्तित्वम्, आत्मवृत्तित्वस्याऽपि प्रवेशे प्रयोजनाभावात्। (नेदंलक्षणम्) बुद्धीच्छाप्रयत्नानां आश्रयभेदेन द्वैविध्यमाह बुद्धीच्छेति ॥ ईश्वराश्रितानां बुद्धीच्छाप्रयत्नानां ईश्वरस्य सर्वप्रपञ्चकर्तृत्वानुरोधेन विनिगमनाविरहेण यस्सर्वज्ञस्ससर्वविदिति श्रुत्यनुरोधेन च सर्वप्रपञ्चविषयकत्वमङ्गीकर्तव्यम्। ईश्वराश्रितानां तेषां अनित्यत्वसाधने विनिगमकाभावेन नित्यत्वमप्यङ्गी-



कार्यम्। ईश्वराश्रिताबुद्धिश्च प्रत्यक्षरूपैव नत्वनुमित्यादिरूपा ॥ ईश्वरस्य नित्यसुखमप्यङ्गीकुर्वन्ति केचन ॥ विभुविशेष (ईश्वरभिन्नविभुविशेष) गुणानां स्वोत्तरोत्पन्नविशेषगुण (विभुविशेषगुण) नाश्यत्वनियमेन नाशप्रतीत्यनुरोधेन च जीवाश्रितस्य तत्त्रयस्य अनित्यत्वमेवाङ्गीकार्यम् (शब्दबुध्योः द्विक्षणावस्थायित्वमेवाङ्गीक्रियते) संस्कारं विभजते संस्कार इति। वेगं लक्षयति पृथिव्यादीति ॥ एतद्वाक्यं स्वरूपकीर्तनपरम्। लक्षणन्तु मनोवृत्तित्वमेव, पृथिव्यादिप्रवेशे प्रयोजनाभावात्। नच मूर्तानां दिगुपाधित्वमिति, न्यायेन मूर्तेषु दिक्कृतविशेषणतासम्बन्धेन सर्वस्यापि प्रपञ्चस्य सत्वेन मनोनिरूपितनिरुक्तसम्बन्धावच्छिन्नवृत्तितामादाय घटादावतिव्याप्तिरिति वाच्यम्, मनोनिरूपितवृत्तितायां समवायसम्बन्धावच्छिन्नत्वस्य निवेशनीयत्वात्, तेनसम्बन्धेन मनसि घटादीनामभावात् नातिव्याप्तिः। नच क्रिया संयोगादौ मनोनिरूपितसमवायसम्बन्धावच्छिन्नवृत्तित्वस्य सत्वादतिव्याप्तिरिति वाच्यम्, संस्कारत्वस्यापि निवेशनीयत्वात्, क्रियादौ संस्कारत्वाभावात् नातिव्याप्तिः ॥

मू॰* अनुभवजन्या स्मृतिहेतुः भावना। आत्ममात्रवृत्तिः ॥

भावनां लक्षयति अनुभवेति ॥ अनुभवजन्यत्वे सति स्मृतिहेतुत्वं भावनाया लक्षणम्। प्रथममनुभवः, तदनु भावनाख्यसंस्कारः,

भावनालक्षणे ॥ ननु विशिष्टबुद्धिं प्रति विशेषणज्ञानस्य कारणतया दण्डीपुरुष इत्यनुभवात्मकविशिष्टबुद्धौ विशेषणज्ञानात्मकदण्डानुभवजन्यत्वस्य दण्डी पुरुष इति जनिष्यमाण स्मृतिहेतुत्वस्य च

तदनु स्मृतिः, इति क्रममनुसृत्य अनुभवजन्यत्वे सति स्मृतिहेतुत्वस्य भावनायां सत्वात् समन्वयः अनुभवजन्यत्वमात्रोक्तावनुभवध्वंसे स्मृतिहेतुत्वमात्रोक्तावात्मादौ च अतिव्याप्तिः, अतो दळद्वयोपादानम्। नच अनुभवजन्यत्वं अनुभवनिष्ठसमवायसम्बन्धावच्छिन्नकारणतानिरूपितकार्यताश्रयत्वरूपं निवेश्यते, ध्वंसं प्रति प्रतियोगिनः तादात्म्यसम्बन्धेनैव कारणतया समवायसम्बन्धावच्छिन्नानुभवनिष्ठकारणतानिरूपितकार्यत्वस्य अनुभवध्वंसेऽभावेन अतिव्याप्तिवारणसम्भवेन स्मृतिहेतुत्वदळमनर्थकमिति वाच्यम्, स्मृतिं प्रत्यनुभवस्य समवायसम्बन्धेनैव कारणतया समवायसम्बन्धावच्छिन्नानुभवनिष्ठकारणतानिरूपितकार्यत्वस्य स्मृतौ सत्वेन तत्राऽतिव्याप्तिवारणाय स्मृतिहेतुत्वदळसार्थक्यात्। अतएव

---

सत्वात् तादृशविशिष्टबुद्धावतिव्याप्तिरिति वाच्यम्, अत्र नुभवजन्यत्वं अनुभवत्वावच्छिन्नकारणतानिरूपितकार्यताश्रयत्वंरूपं निवेश्यते, नत्वनुभवनिष्ठकारणतानिरूपितकार्यताश्रयत्वरूपम्, तथाच विशिष्टबुद्धिं प्रति विशेषणानुभवस्यापि ज्ञानत्वेनैव कारणत्वं नत्वनुभवत्वेन तथाच ज्ञानत्वावच्छिन्नकारणतानिरूपितकार्यताश्रयत्वस्य दण्डी पुरुष इति विशिष्टबुद्धौ सत्वेपि अनुभवत्वावच्छिन्नकारणतानिरूपितकार्यताश्रयत्वस्य तत्राभावात् नातिव्याप्तिः। (दण्डानुभवात् दण्डस्मरणादपि दण्डी पुरुष इति विशिष्टबुद्धेरुदयात् स्मृत्यनुभवसाधारणज्ञानत्वेनैव विशिष्टबुद्धिं प्रति विशेषणज्ञानस्य कारणत्वं वाच्यम्) भावनां प्रत्यनुभवस्यैव कारणतयाऽनुभवत्वावच्छिन्नकारणतानिरूपितकार्यताश्रयत्वं भावनायां वर्तत



गुणत्वदळेनैव अनुभवध्वंसेऽतिव्याप्तिवारणसम्भवे स्मृतिहेतुत्वदलमफलमिति शङ्का निरस्ता, स्मृतावतिव्याप्तिवारणायैव तत्सार्थक्यात्॥

मू* अन्यथा कृतस्य पुनस्तादवस्थ्यापादकः स्थितस्थापकः। कटादिपृथिवीमात्रवृत्तिः॥

स्थितस्थापकं लक्षयति अन्यथेति॥ अन्यशब्दस्य पूर्वावस्थानभिन्नावस्थानाश्रयत्वम्, थाल्प्रत्ययस्य प्रकारतानिरूपकत्वम्, कृञ्धातोः कृतिः, क्तप्रत्ययस्य विषयताविशिष्टम्, षष्ठ्या आधेयत्वञ्चार्थः। साऽवस्था यस्य सः तदवस्थः तदवस्थस्य भावः तादवस्थ्यम्, तच्च तदवस्थावत्वं तच्च प्रकृत्यर्थे प्रकारीभूत धर्मे इति, नियमेन तदवस्थैवेति फलितम्। तथाच, पूर्वावस्थानभिन्नावस्थानाश्रयत्वप्रकारककृतिनिरूपितविषयताविशिष्टवस्तुनिष्ठपूर्वावस्थानसंपादकत्वं स्थितस्थापकस्य लक्षणमिति

---

इति लक्षणसमन्वयः। नचैवं ध्वंसं प्रति प्रतियोगित्वेन रूपेण तत्तध्वंसत्वावच्छिन्नं प्रति तत्तत्प्रतियोगिव्यक्तेः तत्तद्व्यक्तित्वेनैव कारणत्वस्याङ्गीकृततयाऽनुभवध्वंसं प्रत्यनुभवत्वेन कारणत्वाभावेन अनुभवत्वावच्छिन्नकारणतानिरूपितकार्यताश्रयत्वस्यानुभवध्वंसेऽभावेनैव तत्रातिव्याप्तिवारणसम्भवेन स्मृतिहेतुत्वदलस्य वैयर्थ्यमिति वाच्यम्, स्मृतिं प्रत्यनुभवस्यैव कारणतयाऽनुभवत्वावच्छिन्नकारणतानिरूपितकार्यताश्रयत्वस्य स्मृतौ सत्वेन तत्रातिव्याप्तिवारणायैव तत्सार्थक्यात्, स्मृतिहेतुत्वनिवेशे तु नहि स्मृतिः स्मृतिहेतुरिति नातिव्याप्तिरित्यलम्॥

फलितम् । (आत्ममनोऽवृत्तित्वे सति संस्कारत्वं स्थितस्थापकस्य लक्षणं बोध्यम्)

मू॰* चलनात्मकं कर्म । ऊर्ध्वदेशसंयोगहेतुरुत्क्षेपणम् । अधोदेशसंयोगहेतुरपक्षेपणम् । शरीरसन्निकृष्टसंयोगहेतुराकुञ्चनम् । शरीरविप्रकृष्टसंयोगहेतुः प्रसारणम् । अन्यत्सर्वं गमनम् ।

कर्म निरूपयति चलनेति ॥ ऊर्ध्वदेशसंयोगहेतुत्वमुत्क्षेपणस्य लक्षणम् । आदौ क्रिया, ततो विभागः, तत आरम्भकसंयोगनाशः, तत उत्तरदेशसंयोगोत्पत्तिः, इति क्रममनुसृत्य ऊर्ध्वदेशसंयोगहेतुत्वस्य उत्क्षेपणे सत्वात् समन्वयः । नचैवं ईश्वराद्दृष्टादावपितादृशहेतुत्वस्य सत्वादतिव्याप्तिरिति वाच्यम्, कर्मत्वस्यापि निवेशनीयत्वात् । एवं अपक्षेपणादिप्रसारणान्तानां त्रयाणां लक्षणं बोध्यम् । उत्क्षेपणादिभिन्नत्वे सति कर्मत्वं गमनलक्षणं बोध्यम्, एतदेव व्यनक्ति ग्रन्थकारः अन्यत्सर्वं गमनमित्यादिना । तच्च गमनं भ्रमणादिभेदेन पञ्चविधं बोध्यम् ॥

मू॰* नित्यमेकमनेकानुगतं सामान्यम् । द्रव्यगुणकर्मवृत्ति । तद्द्विविधम् । परमपरञ्चेति । परं सत्ता । अपरं द्रव्यत्वादि ॥

सामान्यं लक्षयति नित्यमिति ॥ अनेकेष्वनुगतं अनेकानुगतं, सप्तम्या निरूपितत्वमर्थः, अनुगतत्वञ्च समवेतत्वं, तच्च समवायसम्बन्धावच्छिन्नवृत्तित्वरूपम् । तथाच, नित्यत्वे सति अनेकनिरूपितसमवायसम्बन्धावच्छिन्नवृत्तित्वं सामान्यस्य लक्षणमिति फलितम् । नित्यत्वमात्रोक्तौ गगनादावतिव्याप्तिः । अनेकसमवेतत्वमात्रोक्तौ घटादीनामपि कपालादिरूपानेकपदार्थसमवेतत्वेन घटादावतिव्याप्तिः, अतः दळद्वयोपादानम् । नचैवं आधेयत्वदळेनैव अवृत्तिगगनादावतिव्याप्तिवारणसम्भवेन अनेकसमवेतत्वपर्यन्तस्य वैयर्थ्यमिति वाच्यम्, परमाणुष्वतिव्याप्तिवारणायतत्सार्थक्यात्, नचैवमपि समवेतत्वदळेनैव तत्रातिव्याप्तिवारणसम्भवेऽनेकपदस्य वैयर्थ्यमिति वाच्यम्, जलपरमाणुगतरूपादौ नित्यत्व समवेतत्वयोः सत्वेनातिव्याप्तिप्रसङ्गात् । तन्निवेशे तु प्रत्येकभिन्नस्य परमाणुरूपस्य कस्यापि अनेकसमवेतत्वाभावेन अतिप्रसङ्गविरहात् । नच विभुद्वयसंयोगाङ्गीकर्तृमते तत्संयोगे दळद्वयसत्वेनातिव्याप्तिरिति वाच्यम्, संयोगभिन्नत्वस्यापि निवेशनीयत्वात् । नचात्र एकपदं व्यर्थमिति वाच्यम्, इष्टापत्तेः, तस्य स्वरूपकीर्तनमात्रपरत्वात् । सामान्यं विभजते परमिति ॥ अत्र परत्वमधिकदेशवृत्तित्वरूपम् । अपरत्वं न्यूनदेशवृत्तित्वरूपम् ॥



मू॰* नित्यद्रव्यवृत्तयो व्यावर्तका विशेषाः ॥

विशेषान् लक्षयति नित्यद्रव्येति ॥ नित्यद्रव्यनिरूपितवृत्तिताश्रयत्वे सति व्यावर्तकत्वं नित्यद्रव्यविशेष्यकेतरभेदप्रकारकानुमितिजनकत्वरूपम् यथाश्रुते विशेषलक्षणं बोध्यम् । पृथिव्यादिचतुष्टयपरमाणवः आकाशादिपञ्चकञ्च नित्यद्रव्याणि, तद्विशेष्यकेतरभेदप्रकारकानुमितिः अयं परमाणुः इतरभिन्नः इत्याकारकानुमितिः, तज्जनकत्वं एतद्विशेष-

रूपहेतौ वर्तत इति समन्वयः। एतद्विचारस्तु दीपिकाव्याख्यानावसरे व्यक्तीकरिष्यते ॥

**मू॰ नित्यसम्बन्धः समवायः। अयुतसिद्धवृत्तिः। ययोर्मध्ये एकमविनश्यदवस्थमपराश्रितमेवावतिष्ठते तावयुतसिद्धौ। यथा, अवयवावयविनौ गुणगुणिनौ क्रियाक्रियावन्तौ जातिव्यक्ती विशेषनित्यद्रव्येचेति ॥**

समवायं लक्षयति नित्येति ॥ नित्यत्वे सति सम्बन्धत्वं समवायस्य लक्षणं बोध्यम्। नित्यत्वमात्रोक्तौ गगनादौ सम्बन्धत्वमात्रोक्तौ संयोगादौ च अतिव्याप्तिरिति उभयोपादानम्.॥

अयुतसिद्धं लक्षयति ययोरिति॥ ययोः घटकपालयोः मध्ये एकं घटः अविनश्यदवस्थं विनश्यदवस्थामनापन्नं सत् अपराश्रितमेव कपालाश्रितमेव अवतिष्ठते तौ घटकपालौ अयुतसिद्धौ। एवम् अवयवि गुण क्रिया जाति विशेषाणां कदाचिदपि अवयव गुणि क्रियावत् व्यक्ति नित्यद्रव्याणि विहाय पृथगवस्थितेरभावेन अवयवावयविनोः गुणगुणिनोः क्रियाक्रियावतोः जातिव्यक्त्योः विशेषनित्यद्रव्याणाञ्च अयुतसिद्धत्वमिति भावः। लक्षणन्तु, यन्निष्ठकालनिरूपिताधेयतासामान्यं यदवच्छिन्नं तदुभयान्यतरत्वं बोध्यम्। घटाद्यवयविनः काले कपालाद्यवच्छेदेन वर्तन्ते। अतः यन्निष्ठकालनिरूपिताधेयतासामान्यं घटाद्यवयविनिष्ठकालनिरूपिताधेयतासामान्यं, यदवच्छिन्नं कपालाद्यवयवावच्छिन्नं, तदुभयान्यतरत्वं अवयवावयविनोः वर्तते इति लक्षणसमन्वयः। एवमन्यत्रापि



समन्वयः कार्यः। ननु अत्राधेयतासामान्यमित्यत्र सामान्यपदं व्यर्थम् प्रयोजनाभावात् इतिचेन्न, इदानीं भूतले घटः इति प्रतीत्या घटनिष्ठकालनिरूपिताधेयतायाः भूतलावच्छिन्नतया तदुभयान्यतरत्वमादाय भूतलघटयोरपि अयुतसिद्धत्वप्रसङ्गात्। सामान्यपदनिवेशे तु घटनिष्ठकालनिरूपिताधेयतासामान्यान्तर्गतकपालावच्छिन्नवृत्तितायां भूतलावच्छिन्नत्वाभावेन नातिव्याप्तिः। नचैवमप्यसम्भवः, यत्पदग्राह्यघटनिष्ठाधेयतासामान्यान्तर्गतभूतलावच्छिन्नवृत्तितायां कपालावच्छिन्नत्वाभावात् इति वाच्यम्, इह भूतलकपालयोः घटः इति प्रतीत्यनुरोधेन भूतलावच्छिन्नकालनिरूपितवृत्तितायामपि कपालावच्छिन्नत्वस्य सम्भवेन असम्भवाभावात् ॥

**मू॰ अनादिः सान्तः प्रागभावः। उत्पत्तेः पूर्वं कार्यस्य ॥**

प्रागभावं लक्षयति अनादिरिति ॥ प्रागभावाप्रतियोगित्वे सति ध्वंसप्रतियोगित्वं प्रागभावस्य लक्षणम्। प्रागभावस्योत्पत्त्यभावेन प्राग-

---

ध्वंसप्रागभावलक्षणयोः ॥ नन्वत्र ध्वंसलक्षणे ध्वंसत्वस्य प्रागभावलक्षणे प्रागभावत्वस्य च अनुप्रवेशेनात्माश्रयदोषप्रसङ्गः, ध्वंसलक्षणे प्रागभावत्वस्य प्रागभावलक्षणे ध्वंसत्वस्य च प्रवेशेनान्योन्याश्रयदोषप्रसङ्गश्चेति वाच्यम्, प्रतियोगिजनकाभावत्वम्, प्रागभावत्वम्. प्रतियोगिजन्याभावत्वम् ध्वंसत्वम्, इति परिष्कारे दोषाभावात् ॥

अन्योन्याभावलक्षणे ॥ अत्राभावत्वस्य भावभिन्नत्वरूपत्वेन परिष्करणीयतया भेदलक्षणे भेदत्वस्य घटकत्वेनात्माश्रयदोषप्रसङ्ग इति

भावाप्रतियोगित्वम् । कार्योत्पत्त्यनन्तरं कार्यप्रागभावस्य नष्टत्वेन ध्वंसप्रतियोगित्वञ्चास्तीति लक्षणसमन्वयः । प्रागभावाप्रतियोगित्वमात्रोक्तौ गगनादौ ध्वंसप्रतियोगित्वमात्रोक्तौ घटादौ च अतिव्याप्तिरित्युभयोपादानम् ॥

मू* सादिरनन्तः प्रध्वंसाभावः । उत्पत्तेरनन्तरं कार्यस्य ॥

प्रध्वंसाभावं लक्षयति सादिरिति ॥ प्रागभावप्रतियोगित्वे सति ध्वंसाप्रतियोगित्वं प्रध्वंसाभावस्य लक्षणम् । घटादिध्वंसस्य शिलापातादिजन्यतया प्रागभावप्रतियोगित्वं, कदाचिदपि ध्वंसस्य नाशासम्भवेन ध्वंसाप्रतियोगित्वञ्चास्तीति लक्षणसमन्वयः । प्रागभावप्रतियोगित्वमात्रोक्तौ घटादावतिव्याप्तिः, ध्वंसाप्रतियोगित्वमात्रोक्तौ गगनादावतिव्याप्तिः, अतः उभयोपादानम् ॥

मू* त्रैकालिकसंसर्गाभावोऽत्यन्ताभावः । यथा, भूतले घटो नास्तीति ॥

अत्यन्ताभावं लक्षयति त्रैकालिकेति ॥ त्रैकालिकत्वञ्च नित्यत्वम्, तच्च ध्वंसाप्रतियोगित्वे सति प्रागभावाप्रतियोगित्वम् । संसर्गाभावत्वञ्च

वाच्यम्, अत्राभावत्वम् न भावभिन्नत्वरूपम्, किन्तु भावत्वात्यन्ताभावरूपम्, अतो नोक्तदोषः । नचैमपि भेदलक्षणे भावत्वात्यन्ताभावत्वरूपात्यन्ताभावत्वस्य अत्यन्ताभावलक्षणेऽन्योन्याभावभिन्नत्वदलघटकभेदस्य च अनुप्रविष्टत्वेन प्रकारान्तरेणान्योन्याश्रयदोषप्रसङ्ग इति



अन्योन्याभावभिन्नाभावत्वम् । तथाच, ध्वंसाप्रतियोगित्वे सति प्रागभावाप्रतियोगित्वे सति अन्योन्याभावभिन्नत्वे सति अभावत्वं अत्यन्ताभावस्य लक्षणमिति फलितम् । प्रागभावध्वंसान्योन्याभावाकाशादिवारणाय क्रमेण दळचतुष्टयोपादानम् ॥ केचन संसर्गाभावत्वम्, तादात्म्यभिन्नसम्बन्धावच्छिन्नप्रतियोगिताकाभावत्वमिति वदन्ति । तन्मते ध्वंसप्रागभावयोः सम्बन्धावच्छिन्नप्रतियोगिताकत्वविरहेण अन्योन्याभावे च तादात्म्यभिन्नसम्बन्धावच्छिन्नप्रतियोगिताकत्वविरहेणैव च तत्र तत्र अतिव्याप्तिवारणसम्भवेन त्रैकालिकत्वस्य निवेशे प्रयोजनाभावेन तत्पदं स्वरूपाख्यानपरमेवेति बोध्यम् ॥

मू* तादात्म्यसम्बन्धावच्छिन्नप्रतियोगिताकाभावोऽन्योन्याभावः । यथा, घटः पटो न भवतीति ॥

अन्योन्याभावं लक्षयति तादात्म्येति ॥ तादात्म्यसम्बन्धावच्छिन्नप्रतियोगिताकत्वे सति अभावत्वम् अन्योन्याभावस्य लक्षणम् । येन सम्बन्धेन यत्रास्तीत्युच्यते तन्निष्ठा प्रतियोगिता तत्सम्बन्धावच्छिन्ना, इति न्यायेन घटे पटस्य तादात्म्यसम्बन्धेनाभावेन तत्र तादात्म्यसम्बन्धावच्छिन्नप्रतियोगिताकाभावस्य सत्त्वेन तादात्म्यसम्बन्धावच्छिन्न-

वाच्यम्, अत्यन्ताभावलक्षणघटकीभूतसंसर्गाभावपदेन तादात्म्यभिन्न (वृत्तिनियामक) (तादात्म्यभिन्नत्वोपलक्षित) सम्बन्धावच्छिन्न प्रतियोगिताकाभाव एव विवक्ष्यते, नतु अन्योन्याभावभिन्नाभावः, अतो नोक्तदोषः ॥ एवमेव अन्यत्रापि प्रसक्ता दोषा वारणीयाः ॥

प्रतियोगिताकत्वाभावत्वयोः तस्मिन्नभावे सत्वात् समन्वयः । अभावत्वमात्रोक्तावत्यन्ताभावादावतिव्याप्तिः, तादात्म्यसम्बन्धावच्छिन्नप्रतियोगिताकत्वनिवेशे तु अत्यन्ताभावस्य तादात्म्यभिन्नसम्बन्धावच्छिन्नप्रतियोगिताकतया तत्र तादात्म्यसम्बन्धावच्छिन्नप्रतियोगिताकत्वाभावात् नातिव्याप्तिः, ध्वंसप्रागभावयोस्तु सम्बन्धावच्छिन्नप्रतियोगिताकत्वविरहेण च नातिव्याप्तिः । तादात्म्यसम्बन्धावच्छिन्नप्रतियोगिताकत्वमात्रोक्तौ घटाभाववान्नेति प्रतीतिविषयीभूते घटस्वरूपे घटाभाववद्भेदे तादात्म्यसम्बन्धावच्छिन्नप्रतियोगिताकत्वस्य सत्वेन तत्रातिव्याप्तिः, अतोऽभावत्वनिवेशः । नच तादृशभेदेऽभावत्वमप्यस्तीत्यतिव्याप्तितादवस्थ्यमिति वाच्यम्, अभावत्वस्य भावभिन्नत्वार्थकत्वेन निरुक्तभेदस्य घटात्मकभावरूपतया तत्र भावभिन्नत्वाभावेन अतिव्याप्त्यभावात् ॥

मू॰ सर्वेषामपि पदार्थानामुक्तेष्वेवान्तर्भावात्
सप्तैव पदार्था इति सिद्धम् ॥

तमस्सादृश्यप्रभृतीनामतिरिक्तपदार्थानां सत्वेन कथं सप्तैव पदार्था इत्यत आह सर्वेषामिति ॥ एतत्सर्वं अस्मदीयपारिभाषिकपदार्थसङ्ग्रहे सर्वपदार्थानां क्लृप्तपदार्थेष्वन्तर्भावनिरूपणप्रस्तावे प्रपञ्चितम् ॥

मू॰ काणादन्यायमतयोः। बालव्युत्पत्तिसिद्धये।
अन्नम्भट्टेन विदुषा । रचितस्तर्कसङ्ग्रहः ॥
इति श्रीमदन्नम्भट्टविरचिततर्कसङ्ग्रहः
॥ समाप्तः ॥



कणादस्येदं काणादम्, कणादाभिमतं मतम्, न्यायमतम् गौतममुनिमतम्, काणादन्याये च ते मते चेति द्वंद्वगर्भकर्मधारयः, (कर्मधारयसमासेन समस्यमानपदार्थयोरभेदसंसर्गलाभः) मतयोरित्यत्र षष्ठ्याः विषयतानिरूपकत्वमर्थः, बालानां व्युत्पत्तिरित्यत्र षष्ठ्याः समवेतत्वमर्थः, सिद्धय इत्यत्र चतुर्थ्याः प्रयोजकत्वमर्थः, (समानविभक्तिकनामार्थयोरभेदसम्बन्धेनान्वय इति नियमः) विदुषेत्यत्र तृतीयायाः समवेतत्वम्, रचयतेः कृतिः क्तप्रत्ययस्य भूतकालिकत्वम् विषयतावांश्चार्थः, भूतकालिकत्वस्य कृतौ विषयतावतः तर्कसङ्ग्रहे चान्वयः । काणादन्यायाभिन्नमतद्वयविषयकबालसमवेतव्युत्पत्तिसिद्धिप्रयोजकान्नम्भट्टाभिन्नविद्वत्समवेतभूतकालिककृतिविषयाभिन्नस्तर्कसङ्ग्रहाख्यग्रन्थ इत्यन्वयबोधः ॥

श्रीमत्त्रिलिङ्गदेशविराजमान गुण्टूरुमण्डलान्तर्वर्ति कृष्णातटिनी
समीपवर्ति * वेमूरुग्रामवास्तव्येन श्रीन्यायवेदान्ततन्त्रसमुप
लब्धनिरवधिकप्रज्ञाविशेषवेमूर्युपनामक * श्रीरामब्रह्मसु
धीन्द्रगुरुवरपदपङ्कजसेवासमधिगतशास्त्रविज्ञानेन गुण्टू
रुमण्डलान्तर्वर्ति श्री तेनालिसंस्कृतकलाशालायां तर्का
लङ्कारशास्त्राध्यापकेन * कुरुगण्टयुपनामक श्रीसूर्य
नारायणशास्त्रिद्वितीयतनयेन * श्रीराम
शास्त्रिणा विरचिते श्रीमदन्नम्भट्ट विरचित
तर्कसङ्ग्रहव्याख्यानरूपे तर्कसङ्ग्रह सर्व
स्वेऽयथार्थानुभवादिनिरूपणम्
समाप्तिमगमत्

## अयं ग्रन्थस्समाप्तः

अवच्छेदकं



# विलक्षणकार्यकारणभावविचारः

अथ विचित्रविविधसम्बन्धशतसंकुले न्यायतन्त्रे व्युत्पित्सूनामनायासेन स्थलभेदेन सम्बन्धकल्पनाशक्तिपरिकल्पनाय विलक्षणोऽयं कार्यकारणभावविचार उपक्रम्यते ।

अत्र संग्रहे उद्देशक्रमानुसारेण निर्दिष्टानि पृथिव्यादीन्यालम्बनीकृत्य प्रसक्तानि कार्याणि कारणानि कार्यतावच्छेदककारणतावच्छेदकस्वरूपाणि कार्यतावच्छेदककारणतावच्छेदकसम्बन्धांश्च, अन्तरान्तरा प्रसक्तं कार्यकारणभावमावश्यकं विषयान्तरं च निरूपयितुमुत्सुकोऽस्मि ।

अत्रादौ पृथिवीमालम्बनीकृत्य कार्यकारणभावः प्रदर्श्यते ।

गन्धं प्रति पृथिवी समवायिकारणम् । सर्वत्रापि कार्यजाते समवायकारणस्थले समवाय एव कार्यतावच्छेदकसम्बन्धः, तादात्म्यमेव कारणतावच्छेदकसंबन्धश्च भवति । प्रथमासमवायिकारणस्थले समवाय एव कार्यतावच्छेदकसम्बन्धः, कारणतावच्छेदकसम्बन्धश्च भवति । द्वितीयासमवायिकारणस्थलेपुनः समवायः कार्यतावच्छेदकसम्बन्धः, स्वसमवायिसमवेतत्वं कारणतावच्छेदकसम्बन्धो भवतीति मया वक्ष्यमाणकार्यकारणस्थलेषु प्रतिसमवाय्यसमवायिकारणस्थलेषु समवाय्यसमवायिकारणवस्तु स्वरूपमात्रमेव प्रदर्श्येत । न पुनः पुनः समवाय्यसमवायिकारणस्थलेष्वपि कार्यकारणतावच्छेदकसंबन्धनिर्देशः क्रियेत । अनावश्यकत्वात्, ग्रन्थगौरवात्, चर्वितचर्वणपिष्टपेषणादिसमशीलत्वाच्च ।

अतिव्याप्ति - अलक्ष्ये लक्षणस्य सत्त्वं

अवच्छिन्नं



किन्तु, निमित्तकारणानां नानात्वेन निमित्तकारणस्थलं एव तत्तत्स्थलभेदेन कार्यकारणतावच्छेदकसम्बन्धा निर्दिश्येरन्निति विदाङ्कुर्वन्तु विद्यार्थिनः ।

अथ प्रकृतपृथिवीस्थले गन्धं प्रति पृथिव्याः कारणत्वेन गन्धत्वं कार्यतावच्छेदकम् । पृथिवीत्वं कारणतावच्छेदकं भवति । पृथिव्या गन्धस्याधिकरणत्वेन गन्धत्वमाधेयतावच्छेदकं, पृथिवीत्वमधिकरणतावच्छेदकं भवति । पृथिव्या गन्धस्य लक्षणत्वेन लक्षणतावच्छेदकं गन्धत्वं, लक्ष्यतावच्छेदकं पृथिवीत्वं भवति । अत्र गन्धं प्रति पृथिव्याः समवायिकारणत्वेन तत्तत्कार्यकारणतावच्छेदकसम्बन्धौ समवायतादात्म्यरूपौ क्रमेण भवत इति पूर्वं सूचितमेव । पृथिव्या गन्धस्याधेयत्वेनाऽऽधेयतावच्छेदकसम्बन्धः समवायो भवति । पृथिव्या गन्धस्य लक्षणत्वेन लक्षणतावच्छेदकसम्बन्धः समवायो भवति । अधिकरणता, लक्ष्यता च न सम्बन्धावच्छिन्ने भवत इति विदाङ्कुर्वन्तु । अधिकरणतावच्छेदकलक्ष्यतावच्छेदकतास्तु स्थलभेदेन समवायादिसम्बन्धावच्छिन्ना भवन्ति (यद्धर्मावच्छिन्नं कार्यं तद्धर्मावच्छिन्ना कार्यता, स धर्मः कार्यतावच्छेदकः ।) गन्धादिकं येन सम्बन्धेन कार्यं भवति स सम्बन्धः कार्यतावच्छेदकः, येन सम्बन्धेनाधेयं भवति स सम्बन्ध आधेयतावच्छेदकः, येन सम्बन्धेन लक्षणं भवति स सम्बन्धो लक्षणतावच्छेदकः, येन सम्बन्धेन लक्ष्यतावच्छेदकं भवति स लक्ष्यतावच्छेदकसम्बन्धः, तत्तत्सम्बन्धावच्छिन्नाः कार्यताप्रमुखा भवन्तीति विदाङ्कुर्वन्तु ।